# SRIMAD-BHAGAVATAM

A New Edition

The Text of Shridhara

with

VISHISHTADWAITA AND DWAITA READINGS



Volume II.

SKANDHAS 8-12.



EDITED AND PUBLISHED

BY

T. R. KRISHNACHARYA,

Proprietor Madhva Vilas Book Depot, Triplicane, Madras, S. E.

PRINTED BY RAMCHANDRA YESU SHEDGE, AT THE "NIRNAYA-SAGAR" PRESS,

23, KOLBHAT LANE,

1916.

॥ श्रीः ॥

# श्रीमद्भागवतम् ।



## श्रीधरीयपाठानुसारि ।

## द्वैतविशिष्टाद्वैतपाठोपेतम् ।



## द्वितीयोभागः २.

स्कन्धाः ८–१२.

एतच्च मद्रास नगरान्तर्गत 'तिरुवलिकेणी' वास्तव्येन मध्वविलास-
पुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण**

संशोध्य

मुम्बापुर्यां
तुकाराम जावजी इत्येतेषां सुप्रसिद्ध "निर्णयसागर" मुद्रणयन्त्रे
मुद्रयित्वा प्रकाशितम् ।

शाके १८३८ अनलनामसंवत्सरे ।

॥ प्रथमोऽध्यायः ॥

(1)

हे गुरो स्वायंभुमनोः वंशः विस्तराच्छ्रुतः। यत्र चातुर्वर्ण्याश्रिताः धर्माः श्रुताः। यत्र विश्वसृजां (मरीच्यादि प्रजापतेर्वंशाश्च श्रुताः॥

(2) यत्र यत्र हरेर्जन्म कर्माणि च महीयसः = ಯಾವ ಯಾವ ಮನ್ವಂತರಗ[illegible]
ಯಾವ ಯಾವ ಅವತಾರಗಳನ್ನೆತ್ತಿರುವನು? ಯಾವ ಯಾವ ಅದ್ಭುತ ಕರ್ಮ
ಗಳನ್ನು ನಡೆಸಿರುವನು?

(3) ಇದುವರೆಗೆ ಕಳೆದುಹೋದ ಮನ್ವಂತರಗಳೆಷ್ಟು? ಈಗ ನಡೆಯುವ ಮನ್ವಂ
ತರವಾವುದು? ಮುಂದಿನ ಮನ್ವಂತರದಲ್ಲಿ ಪರಮಾತ್ಮನಿಂದ ನಡೆಯಬೇ
ಕಾದ ಕಾರ್ಯ ಯಾವದು?

(4) अस्मिन् कल्पे स्वायंभुवादयः षट् मनवः व्यतीताः। ಇವರಲ್ಲಿ ಮೊದಲ
ನೆಯವನೇ ಸ್ವಾಯಂಭುವ ಮನುವು. ಅವನ ಚರಿತ್ರೆಯನ್ನು ದೇವತೆಗಳ ಸೃ
ಷ್ಟಿಗೆ ಕಾರಣನಾದ ಅವನ ವಂಶವನ್ನೂ ನಿನಗೆ ಮೊದಲಿಗೆ ತಿಳಿಸುವೆನು.

(5) ಆ ಸ್ವಾಯಂಭುವ ಮನುವಿಗೆ ಆಕೂತಿ ಎಂತಲೂ, ದೇವಹೂತಿ ಎಂತಲೂ ಇ
ಬ್ಬರು ಹೆಣ್ಣುಮಕ್ಕಳು. ಆಕೂತಿಯಲ್ಲಿ ಪರಮಾತ್ಮನು ಯಜ್ಞನೆಂಬ ನಾಮ
ದಿಂದಲೂ ದೇವಹೂತಿಯಲ್ಲಿ ಕಪಿಲನೆಂಬ ನಾಮಕನಾಗಿಯೂ [illegible]
[illegible]ನ ಜನಿಸಿದನು.

(7) ಸ್ವಾಯಂಭುವಮನುವು ತನ್ನ ಪತ್ನಿಯಾದ ಶತರೂಪೆಯೊಡನೆ....

(8) ಸುನಂದಾ ನದಿಯಲ್ಲಿ.

(9) येन चेतयते विश्वं = ಯಾವನಿಂದಲೇ ಈ ಜಗತ್ತೆಲ್ಲವೂ ತನ್ನ ವ್ಯಾಪಾರದ
ಲ್ಲಿ ತೊಡಗುವದೋ
विश्वं चेतयते न यं = ಯಾವನು ಬೇರೊಬ್ಬರ ಪ್ರೇರಣೆಯಿಲ್ಲದೆ ತಾನಾಗಿಯೇ ಸ್ವ:
ಸ್ವೇಚ್ಛೆಯಿಂದ ಜಗದ್ವ್ಯಾಪಾರಗಳನ್ನು ನಡೆಸುವನೋ
यो जागर्ति... = ಲೋಕವೆಲ್ಲವೂ ನಿದ್ರೆಮಾಡುತ್ತಿರುವಾಗಲೂ ಯಾವನೊಬ್ಬನ
ಮಾತ್ರ ಎಚ್ಚರದಿಂದ ಎಲ್ಲವನ್ನೂ ನೋಡುವನೋ

(13) निरीह = ನಿರಪೇಕ್ಷನಾದವನು.

स्वीसके
र। रंगप्पाचार्यः
ताकवाड० ॥ 23 3 1923.

॥ श्रीः ॥

श्रीगोपालकृष्णाय नमः ।

# श्रीमद्भागवतम् ।

## अष्टमस्कन्धः ८

### प्रथमोऽध्यायः ॥ १ ॥

स्वायंभुवादिमन्वन्तरचतुष्टयनिरूपणं ॥ १ ॥ चतुर्थमन्वन्तरीयभगवदवतारभूतस्य हरेर्गजेन्द्रमोक्षणकथोपक्षेपः ॥ २ ॥

ओंनमोभगवतेवासुदेवाय ।

**राजोवाच—**

स्वायंभुवस्येह गुरो वंशोऽयं विस्तराच्छ्रुतः ।
[यत्र धर्माश्च विविधाश्चातुर्वर्ण्याश्रिताः शुभाः ।]
यत्र विश्वसृजां सर्गो मनूनन्यान्वदस्व नः ॥१॥
यत्रयत्र हरेर्जन्म कर्माणि च महीयसः ।
गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥२॥
यद्यस्मिन्नन्तरे ब्रह्मन्भगवान्विश्वभावनः ।
कृतवान्कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥

**ऋषिरुवाच—**

मनवोऽस्मिन्व्यतीताः षट् कल्पे स्वायंभुवादयः ।
आद्यस्ते कथितो यत्र देवादीनां च संभवः ॥४॥
आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ।
धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः ॥ ५ ॥
कृतं पुरा भगवतः कपिलस्यानुवर्णितम्
आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह ॥ ६ ॥
विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ।
विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥७॥
सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ।
तप्यमानस्तपो घोरमिदमन्वाह भारत ॥ ८ ॥

**मनुरुवाच—**

[ वासुदेवो वसत्येष सर्वदेहेष्वनन्यदृक् । ]
येन चेतयते विश्वं विश्वं चेतयते न यम् ।
यो जागर्ति शयानेऽस्मिन्नायं तं वेद वेद सः ॥९॥
आत्मावास्यमिदं विश्वं यत्किंचिज्जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् १०
यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति ।
तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥
न यस्याद्यन्तौ मध्यं च स्वः परो नान्तरं बहिः ।
विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् ॥१२॥
स विश्वकायः पुरुहूत ईशः
सत्यः स्वयंज्योतिरजः पुराणः ।
धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या
तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥
अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे ।

---

१ विज० मनोर्वंशो । २ उभ० इदमर्धमधिकं । ३ विज० मन्वन्तरे हरेर्जन्मकर्माणि च महीयसः । ४ वीर० सर्वेमन्वन्तरे । ५ वीर० मूर्तिभ्यां पुत्रतां प्राप्तो भगवान्स महेश्वरः । ६ वीर० श्रुतं त्वया ।

१ वीर० इदमर्धमधिकं । २ उभ० येनायं तपते विश्वं विश्ववीर्यं यतस्तपः । ३ विज० यज्जगत्यां जगन्मनः । ४ विज० न पश्यन्ति । ५ वीर० न यस्याद्यन्तमध्यानि । विज० यस्याद्यन्तो न मध्यं च । ६ वीर० सर्वस्य गोप्ता ह्यजरः पुराणः । विज० सत्यं परं ज्योतिरजः पुराणः ।

ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥१४॥
ईहते भगवानीशो न हि तत्र विषज्जते ।
आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् १५
तमीहमानं निरहङ्कृतं बुधं[1]
निराशिषं पूर्णमनन्यचोदितम् ।
नॄञ्छिक्षयन्तं[2] निजवर्त्मसंस्थितं[3]
प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥
श्रीशुक उवाच—
इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ।
दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन्क्षुधा[4] ॥१७॥
तांस्तथाऽवसितान्वीक्ष्य यज्ञः सर्वगतो हरिः ।
यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टपम् ॥१८॥
स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ।
द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥१९॥
तत्रेन्द्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ।
ऊर्जस्तंभादयः[5] सप्त ऋषयो ब्रह्मवादिनः ॥२०॥
ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् ।
तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥२१॥
अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ।
अन्वशिक्षन् व्रतं तस्य कौमारब्रह्मचारिणः ॥२२॥
तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।
पवनः[6] सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ॥२३॥
वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ।
सत्या वेदश्रुता[1] भद्रा देवा इन्द्रस्तु सत्यजित् २४
धर्मस्य सूनृतायां तु भगवान्पुरुषोत्तमः ।
सत्यसेन इति ख्यातो जातः सत्यव्रतैः[2] सह २५
सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ।
भूतद्रुहो भूतगणांस्त्ववधीत्सत्यजित्सखः[3] ॥२६॥
चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः[4] ।
पृथुः[5] ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः २७
सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ।
ज्योतिर्धामादयः[6] सप्त ऋषयस्तामसेन्तरे[7] ॥ २८ ॥
देवा वैधृतयो नाम विधृतेस्तनया नृप ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा २९
तत्राऽपि जज्ञे भगवान्हरिण्यां हरिमेधसः ।
हरिरित्याहृतो[8] येन गजेन्द्रो मोचितो ग्रहात् ३०
राजोवाच—
बादरायण एतत्ते श्रोतुमिच्छामहे वयम् ।
हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥
तत्कथा सुमहत्पुण्यं धन्यं स्वस्त्ययनं शुभम् ।
यत्रयत्रोत्तमश्लोको भगवान् गीयते हरिः ॥३२॥
सूत उवाच—
परीक्षितैवं स तु बादरायणिः
प्रायोपविष्टेन कथासु चोदितः ।
उवाच विप्राः प्रतिनन्द्य पार्थिवं
मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

गजेन्द्रमोक्षकथारंभः ॥ १ ॥ स्वैरं गजीभिः सह विक्रीडतो मदान्धस्य गजेन्द्रस्य ग्राहेण ग्रहणे गजेन्द्रस्य हरिस्मरण-प्राप्तिः ॥ २ ॥

श्रीशुक उवाच—
आसीद्गिरिवरो राजंस्त्रिकूट इति विश्रुतः ।
क्षीरोदेनाऽऽवृतः श्रीमान्योजनायुतमुच्छ्रितः ॥१॥
तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ।
दिशः[9] खं रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥२॥

१ विज० बुधैः । २ वीर० स्वान् शिक्ष । विज० तन्छिक्ष । ३ विज० मर्त्यमूढान् । ४ विज० क्रुधा । ५ विज० ओजस्तंभा । वीर० और्जस्तंभा । ६ वीर० सवनः ।

१ वीर० देवश्रुता । २ विज० सत्यवतैः । ३ विज० सत्यजित्स्तुतः । ४ विज० तापसः । ५ वीर० वृषा । विज० वृषः । ६ वीर० व्योमादयः । विज० धानादयः । ७ विज० स्तापसेन्तरे । ८ विज० त्वाहुतो । ९ उभ० दिशश्च ।

(23) – (26) 3ನೇ ಮನ್ವಂತರದಲ್ಲಿ - ಪ್ರಿಯವ್ರತನ ಮಗನಾದ ಉತ್ತಮನು - 3ನೇ ಮ.

ಪವನ, ಸೃಂಜಯ ಮುಂತಾದವರು — ಮನುಪುತ್ರರು

ವಸಿಷ್ಠಪುತ್ರರಾದ ಪ್ರಮದಾದಿಗಳು - ಸಪ್ತರ್ಷಿಗಳು

ಸತ್ಯಜಿತ್ತು — ಇಂದ್ರಪದವಿಯಲ್ಲಿದ್ದವನು.

ಸತ್ಯರೆಂಬವರೂ, ದೇವಶ್ರುತರೆಂಬವರೂ,
ಭದ್ರರೆಂಬವರೂ ಹೆಸರುಳ್ಳಂಥವರು } ಆಗ ದೇವತೆಗಳು

ಪರಮಾತ್ಮನು ಧರ್ಮನೆಂಬುವನಿಗೆ ಸೂನೃತೆಯೆಂಬ ಹೆಂಡತಿಯಲ್ಲಿ ಸತ್ಯಸೇನ ಹೆಸರಿನಿಂದ ಹುಟ್ಟಿ ಇಂದ್ರನಿಗೆ ಸಹಾಯಕನಾಗಿ ಯಕ್ಷರಾಕ್ಷಸರನ್ನು ಸಂಹರಿಸಿ

(27)-(30) - 4ನೇ ಮನ್ವಂತರದಲ್ಲಿ - ಉತ್ತಮನ ತಮ್ಮನಾದ ತಾಮಸನು - 4ನೇ ಮನು

ಪೃಥು ಮುಂತಾದ 10 ಜನರು — ಮನುಪುತ್ರರು

ಸತ್ಯಕರೆಂಬವರೂ, ಹರಿಗಳೆಂಬವರೂ,
ವೀರರೆಂಬವರಾಗಿ ಮೂರು ಬಗೆ } ದೇವತೆಗಳು.
ಇವರು —

ಜ್ಯೋತಿರ್ಧಾಮಾದಿಗಳು — ಸಪ್ತರ್ಷಿಗಳು.

ತ್ರಿಶಿಖನೆಂಬುವನು — ಇಂದ್ರಪದವಿ ಆಳಿದ

ಆ ಕಾಲದಲ್ಲಿ ವಿಧೃತಿಗೆ ಹುಟ್ಟಿದ ವೈಧೃತಿಗಳೆಂಬುವರು ಕಾಲವಶದಿಂದ ನಷ್ಟವಾಗುತ್ತಿದ್ದ ವೇದಗಳನ್ನು ರಕ್ಷಿಸಿದರು. ಹರಿಮೇಧನೆಂಬುವನಿಗೆ ಹರಿಣೀ ಎಂಬ ಹೆಂಡತಿಯಲ್ಲಿ ಹರಿ ಎಂಬ ಹೆಸರಿನಿಂದ ಪರಮಾತ್ಮನು ಅವತರಿಸಿ ಗಜೇಂದ್ರನನ್ನು ರಕ್ಷಿಸಿದನು.

## 2ನೇ ಅಧ್ಯಾಯ

(2) ಅದರ ಮೂರು ಶಿಖರಗಳಲ್ಲೊಂದು ಬೆಳ್ಳಿಮಯವಾಗಿಯೂ ಮತ್ತೊಂದು ಉಕ್ಕಿನ ಮಯವಾಗಿಯೂ ಇನ್ನೊಂದು ಬಂಗಾರದ ಮಯವಾಗಿಯೂ ಇತ್ತು.

(3) गुल्म = ಪೊದರು. निर्घोषैर्निर्झरांभसी = ಜರಿಯ ನೀರಿನ ಶಬ್ದದಿಂದಲೂ.

निर्जर: = ಬೆಟ್ಟದ ಜರಿ.

(4) स्वावनिज्यमानांघ्रि: समन्तात् पय ऊर्मिभि: ] = ತನ್ನ ಸುತ್ತಲೂ ಕ್ಷೀರಸಮುದ್ರದ ಅಲೆಗಳಿಂದ ತೊಳೆಯಲ್ಪಡುತ್ತಿರುವ ಪಾದ. (अवनिज्यमा

करोति .... भि: = [illegible]
[illegible]

अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ।
नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झरांभसाम् ॥ ३ ॥
स चावनिज्यमानाङ्घ्रिः समन्तात्पयऊर्मिभिः ।
करोति श्यामलां भूमिं हरिन्मरकताश्मभिः॥४॥
सिद्धचारणगन्धर्वविद्याधरमहोरगैः ।
किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥ ५ ॥
यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया ।
अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया ॥ ६ ॥
नानारण्यपशुव्रातसङ्कुलद्रोण्यलङ्कृतः ।
चित्रद्रुमसुरोद्यानकलकण्ठविहङ्गमः ॥ ७ ॥
सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ।
देवस्त्रीमज्जनामोदसौरभांब्वनिलैर्युतः ॥ ८ ॥
तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः ।
उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥
सर्वतोऽलङ्कृतं दिव्यैर्नित्यं पुष्पफलद्रुमैः ।
मन्दारैः पारिजातैश्च पाटलाशोकचंपकैः ॥१०॥
चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ।
क्रमुकैर्नालिकेरैश्च खर्जूरैर्बीजपूरकैः ॥ ११ ॥
मधूकैः सालतालैश्च तमालैरसनार्जुनैः ।
अरिष्टोदुंबरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ १२ ॥
पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ।
द्राक्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥
बिल्वैः कपित्थैर्जंबीरैर्वृतो भल्लातकादिभिः ।
तस्मिन्सरः सुविपुलं लसत्काञ्चनपङ्कजम् ॥१४॥
कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ।
मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः ॥ १५ ॥
हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ।
जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ १६ ॥
मत्स्यकच्छपसञ्चारचलत्पद्मरजःपयः ।
कदंबवेतसनलनीपवञ्जुलकैर्वृतम् ॥ १७ ॥
कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः ।
कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८
मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ।
शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः ॥ १९
तत्रैकदा तद्गिरिकाननाश्रयः
करेणुभिर्वारणयूथपश्चरन् ।
सकण्टकान्कीचकवेणुवेत्रव-
द्विशालगुल्मं प्ररुजन्वनस्पतीन् ॥ २० ॥
यद्गन्धमात्राद्धरयो गजेन्द्रा
व्याघ्रादयो व्यालमृगाः सखड्गाः ।
महोरगाश्चापि भयाद्द्रवन्ति
सगौरकृष्णाः शरभाश्चमर्यः ॥ २१ ॥
वृका वराहा महिषर्क्षशल्या
गोपुच्छसालावृकमर्कटाश्च ।
अन्यत्र क्षुद्रा हरिणाः शशादय-
श्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥
सघर्मतप्तः करिभिः करेणुभि-
र्वृतो मदच्युत्कलभैरनुद्रुतः ।
गिरिं गरिम्णा परितः प्रकंपय-
न्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥ २३ ॥
सरोऽनिलं पङ्कजरेणुरूषितं
जिघ्रन्विदूरान्मदविह्वलेक्षणः ।
वृतः स्वयूथेन तृषार्दितेन त-
त्सरोवराभ्याशमथागमद्द्रुतम् ॥ २४ ॥
विगाह्य तस्मिन्नमृतांबु निर्मलं
हेमारविन्दोत्पलरेणुवासितम् ।
पपौ निकामं निजपुष्करोद्धृत-
मात्मानमद्भिः स्नपयन् गतक्लमः ॥ २५ ॥
स्वपुष्करेणोद्धृतसीकरांबुभि-
र्निपाययन्संस्नपयन्यथा गृही ।
घृणी करेणूः कलभांश्च दुर्मदो
नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥

१ विज० सदा निर्णिज्य । २ विज० शुभैर्मरकतादिभिः । ३ वीर० जुष्टद्रोणिकः । ४ विज० सौरभाक्तानिलैर्युतः । ५ वीर० भल्लातकैरपि । ६ विज० निर्जुष्टं । ७ वीर० शकुनैः । ८ उभ० कलनिःस्वनैः । ९ विज० वेतसरल ।

१ उभ० सकण्टकं । २ विज० अन्ये च । ३ विज० वृतश्च । ४ वीर० धृतं ह्यात्मान । ५ विज० अयं श्लोको न दृश्यते । ६ वीर० गृणन् ।

तं तत्र कश्चिन्नृप दैवचोदितो
ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ।
यदृच्छयैवं व्यसनं गतो गजो
यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥
तथाऽऽतुरं यूथपतिं करेणवो
विकृष्यमाणं तरसा बलीयसा ।
विचुक्रुशुर्दीनधियोऽपरे गजाः
पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥
नियुध्यतोरेवमिभेन्द्रनक्रयो-
र्विकर्षतोरन्तरतो बहिर्मिथः ।
समाः सहस्रं व्यगमन्महीपते
सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥
ततो गजेन्द्रस्य मनोबलौजसां[1]
कालेन दीर्घेण महानभूद्व्ययः ।
विकृष्यमाणस्य जलेऽवसीदतो
विपर्ययोऽभूत्सकलं जलौकसः[1] ॥ ३० ॥
इत्थं गजेन्द्रः स यदाप सङ्कटं
प्राणस्य देही विवशो यदृच्छया ।
अपारयन्नात्मविमोक्षणे[2] चिरं
दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥
न मामिमे ज्ञातय आतुरं गजाः
कुतः करिण्यः प्रभवन्ति मोचितुम् ।
ग्राहेण पाशेन विधातुरावृतो-
ऽप्यहं च तं यामि परं परायणम् ॥ ३२
यः कश्चनेशो बलिनोऽन्तकोरगा-
त्प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भया-
न्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

ग्राहगृहीतेन गजेन्द्रेण भगवत्स्तुतिः ॥ १ ॥ तत्क्षणागतेन हरिणा ग्राहाद्गजेन्द्रमोचनं ॥ २ ॥

**श्रीशुक उवाच—**
एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥१॥
**गजेन्द्र उवाच—**
ॐ नमो भगवते तस्मै यत एतच्चिदात्मकम् ।
पुरुषायाऽऽदिबीजाय परेशायाभिधीमहि ॥ २ ॥
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवम् ॥ ३ ॥
यः स्वात्मनीदं निजमाययाऽर्पितं
क्वचिद्विभातं क्व च तत्तिरोहितम् ।
अविद्धदृक्साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥
कालेन पञ्चत्वमितेषु कृत्स्नशो
लोकेषु[3] पालेषु च सर्वहेतुषु ।
तमस्तदाऽऽसीद्गहनं गभीरं
यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥
न यस्य देवा ऋषयः पदं विदु-
र्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ।
यथा नटस्याऽऽकृतिभिर्विचेष्टतो
दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥
दिदृक्षवो यस्य पदं सुमङ्गलं
विमुक्तसङ्गा मुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने
भूतात्मभूताः[4] सुहृदः स मे गतिः ॥ ७ ॥
न विद्यते यस्य च जन्म कर्म वा

1 विज० सहोबलौ ।

1 विज० कसां । 2 विज० विमोक्षणं । 3 विज० लीनेषु । 4 विज० सर्वात्मभूतः ।

## 3వ అధ్యాయం

(1) व्यवसित: सन् = నిశ్చయించి.

(3) इदं जगत् यत: स्रष्टृत्वं । येन प्रवर्तकत्वं । य: सत्ताप्रदत्वं ।

〃 द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया

न नामरूपे गुणदोष एव वा ।
तथाऽपि लोकाप्ययसंभवाय यः
स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥
तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥
नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥
सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥
नमः शान्ताय घोराय मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च॥१२॥
क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायाऽऽत्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥
सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
असता छाययोक्ताय सदाभासाय ते नमः॥१४॥
नमोनमस्तेऽखिलकारणाय
निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नायमहार्णवाय
नमोऽपवर्गाय परायणाय ॥ १५ ॥
गुणारणिच्छन्नचिदूष्मपाय
तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागम-
स्वयंप्रकाशाय नमस्करोमि ॥ १६ ॥
मादृक्प्रपन्नपशुपाशविमोक्षणाय
मुक्ताय भूरिकरुणाय नमोऽलयाय ।
स्वांशेन सर्वतनुभृन्मनसि प्रतीत-
प्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १७ ॥
आत्मात्मजाप्तगृहवित्तजनेषु सक्तै-
र्दुष्प्रापणाय गुणसङ्गविवर्जिताय ।
मुक्तात्मभिः स्वहृदये परिभाविताय
ज्ञानात्मने भगवते नम ईश्वराय ॥ १८ ॥
यं धर्मकामार्थविमुक्तिकामा
भजन्त इष्टां गतिमाप्नुवन्ति ।
किन्त्वाशिषो रात्यपि देहमव्यय
करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १९ ॥
एकान्तिनो यस्य न कञ्चनार्थं
वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमङ्गलं
गायन्त आनन्दसमुद्रमग्नाः ॥ २० ॥
तमक्षरं ब्रह्म परं परेश-
मव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूर-
मनन्तमाद्यं परिपूर्णमीडे ॥ २१ ॥
यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः २२
यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो
निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ।
तथा यतोऽयं गुणसंप्रवाहो
बुद्धिर्मनः खानि शरीरसर्गाः ॥ २३ ॥
स वै न देवासुरमर्त्यतिर्य-
ङ् स्त्री न षण्ढो न पुमान्न जन्तुः ।
नायं गुणः कर्म न सन्न चाँस-
न्निषेधशेषो जयतादशेषः ॥ २४ ॥
जिजीविषे नाहमिहामुया कि-
मन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लव-
स्तस्याऽऽत्मलोकावरणस्य मोक्षम् ॥ २५ ॥
सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम्॥२६॥
योगरन्धितकर्माणो हृदि योगविभाविते ।

१ विज० लोकस्य च । २ विज० विपश्चितां । ३ वीर० गूढाय । ४ विज० कर्मिणे । ५ विज० असत्याच्च विमुक्ताय । ६ विज० नारायणायार्तिविनाशनाय । ७ विज० चिदुष्मपाय । ८ वीर० नैष्कर्म्यभावाय निवर्तितागम । नैष्कर्म्येत्यादिगुणसंगविवर्जितायेत्यन्तं अर्धचतुष्टयं विज० पाठे न दृश्यते ।

१ विज० युक्तात्म । २ उभ० किं चाशिषो । ३ विज० त्प्रधानाः । ४ विज० यच्चरितं । ५ विज० जल्प्या । ६ वीर० वर्गाः । विज० सर्गः । ७ विज० न्त वाऽस । ८ वीर० वेदनं ।

योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥
नमोनमस्तुभ्यमसह्यवेग-
शक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये
कदिन्द्रियाणामनवाप्यवर्त्मने ॥ २८ ॥
नायं वेद स्वमात्मानं यच्छक्त्याऽहं धिया हतम् ।
तं दुरत्ययमाहात्म्यं भगवन्तमितोस्म्यहम् ॥२९॥
श्रीशुक उवाच—
एवं गजेन्द्रमुपवर्णितनिर्विशेषं
ब्रह्मादयो विविधलिङ्गभिदाऽभिमानाः ।
नैते यदोपससृपुर्निखिलात्मकत्वा-
त्तत्राखिलामरमयो हरिराविरासीत् ॥ ३० ॥

तं तद्वदार्तमुपलभ्य जगन्निवासः
स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ।
छन्दोमयेन गरुडेन समुह्यमान-
श्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥ ३१ ॥
सोऽन्तःसरस्युरुबलेन गृहीत आर्तो
दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ।
उत्क्षिप्य सांबुजकरं गिरमाह कृच्छ्रा-
न्नारायणाखिलगुरो भगवन्नमस्ते ॥ ३२ ॥
तं वीक्ष्य पीडितमजः सहसाऽवतीर्य
सग्राहमाशु सरसः कृपयोज्जहार ।
ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं
संपश्यतां हरिरमूमुचदुस्रियाणाम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे तृतीयोऽध्यायः ॥ ३

## चतुर्थोऽध्यायः ॥ ४ ॥

देवलशापेन ग्राहतां प्राप्तस्य हूहूनामकगन्धर्वस्य स्वस्वरूपप्रापणं ॥ १ ॥ पूर्वमिन्द्रद्युम्ननाम्नो राज्ञः अगस्त्यशापाद्गजेन्द्रत्वं प्राप्तस्य भगवता तज्जन्मपरिहारपूर्वकं स्वपार्षदीकरणं ॥ २ ॥ हरिणा गजेन्द्रमोक्षपारायणस्य फलकथनं ॥ ३ ॥

श्रीशुक उवाच—
तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ।
मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥१॥
नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ।
ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥२॥
योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥
प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ।
अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥
सोऽनुकंपित ईशेन परिक्रम्य प्रणम्य तम् ।
लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥५
गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥

स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ।
इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥७॥
स एकदाऽऽराधनकाल आत्मवा-
न्गृहीतमौनव्रत ईश्वरं हरिम् ।
जटाधरस्तापस आप्लुतोऽच्युतं
समर्चयामास कुलाचलाश्रमः ॥ ८ ॥
यदृच्छया तत्र महायशा मुनिः
समागमाच्छिष्यगणैः परिश्रितः ।
तं वीक्ष्य तूष्णीमकृतार्हणादिकं
रहस्युपासीनमृषिश्चुकोप ह ॥ ९
तस्मा इमं शापमदादसाधु-
रयं दुरात्माऽकृतबुद्धिरद्य ।
विप्रावमन्ता विशतां तमोन्धं

१ विज० बुद्धीन्द्रियाणा । २ उभ० हतः । ३ विज० भगवन्तं नतोस्म्यहं । ४ विज० मरवरो ।

१ विज० ह्यगमदाशु । २ विज० श्रयः । ३ विज० मद्धेलनाप्राग्विशतां । ४ उभ० तमिस्रं ।

यथा गजः स्तब्धमतिः स एव ॥ १० ॥
**श्रीशुक उवाच—**
एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः ।
इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥
आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशनीम् ।
हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः ॥ १२ ॥
एवं विमोक्ष्य गजयूथपमब्जनाभ-
स्तेनापि पार्षदगतिं गमितेन युक्तः ।
गन्धर्वसिद्धविबुधैरुपगीयमान-
कर्माऽद्भुतं स्वभवनं गरुडासनोऽगात् ॥ १३ ॥
एतन्महाराज तवेरितो मया
कृष्णानुभावो गजराजमोक्षणम् ।
स्वर्ग्यं यशस्यं कलिकल्मषापहं
दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥
यथाऽनुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ।
शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥१५॥
इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ।
शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥१६॥
**श्रीभगवानुवाच—**
ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ।
वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥१७॥
शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ।
क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥१८
श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ।
सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥
शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ।
ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥
मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ।
कर्माण्यनन्तपुण्यानि सूर्यं[1] सोमं हुताशनम् ॥२१॥
प्रणवं सत्यमव्यक्तं गोविप्रान्धर्ममव्ययम्[2] ।
दाक्षायणीर्[3]धर्मपत्नीः सोमकश्यपयोरपि ॥ २२ ॥
गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम्
ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च मानवान् ॥२३॥
उत्थायापररात्रान्ते प्रयताः सुसमाहिताः
स्मरन्ति मम रूपाणि मुच्यन्ते ह्येनसो[4]ऽखिलात् ॥
ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये ।
तेषां प्राणात्यये चाहं ददामि विमलां[5] मतिम्[6] २५
**श्रीशुक उवाच—**
इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम् ।
हर्षयन्विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमषष्ठमन्वन्तरानरूपण ॥ १ ॥ अमृतमथनकथारंभः ॥ २ ॥ दुर्वाससः शापादितिजपराजितैर्देवैः स्वपराजयं विरिञ्चये विज्ञाप्य तेन सह क्षीराब्धिगमनं ॥ ३ ॥ ब्रह्मणा भगवत्प्रसादाय तत्स्तुतिः ॥ ४ ॥

**श्रीशुक उवाच—**
राजन्नुदितमेतत्ते हरेः कर्माघनाशनम् ।
गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥
पञ्चमो रैवतो नाम मनुस्तामसमोदरः[1] ।
बलिविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥
विभुरिन्द्रः सुरगणा राजन्भूतरयादयः[2] ।
हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः[3] ३
पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ।
तयोः स्वकलया जज्ञे वैकुण्ठो भगवान्स्वयम् ॥४॥
वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः ।

[1] विज० सदोषः । [2] विज० अथाप्तु । [3] विज० स्तापस ।

[1] विज० सूर्यसोमहुताशनान् । [2] विज० मक्षयं । [3] विज० दाक्षायणीं धर्मपत्नीं । [4] उभ० तेंहसो । [5] वीर० विपुलां । [6] विज० गतिं ।

रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥५॥
तस्यानुभावः कथितो गुणाश्च परमोदयाः ।
भौमान् रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ६
षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ।
पूरुपूरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥
इन्द्रो मन्त्रद्रुमस्तत्र[1] देवा आप्यादयो गणाः ।
मुनयस्तत्र वै राजन्हविष्मद्वीरकादयः ॥ ८ ॥
तत्रापि देवः संभूत्यां वैराजस्याभवत्सुतः ।
अजितो नाम भगवानंशेन जगतः पतिः ॥ ९ ॥
पयोधिं[2] येन निर्मथ्य सुराणां साधिता सुधा ।
भ्रममाणोंभसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥

**राजोवाच—**

यथा भगवता ब्रह्मन्मथितः क्षीरसागरः ।
यदर्थं वा यतश्चाद्रिं दधारांबुचरात्मना ॥ ११ ॥
यथाऽमृतं सुरैः प्राप्तं किंचान्यद[3]भवत्ततः ।
एतद्भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥
त्वया[4] संकथ्यमानेन महिम्ना सात्वतां पतेः ।
नातितृप्यति[5] मे चित्तं सुचिरं तापतापितम् १३

**सूत उवाच—**

संपृष्टो[6] भगवानेवं द्वैपायनसुतो द्विजाः ।
अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥

**श्रीशुक उवाच—**

यदा युद्धेऽसुरैर्देवा बाध्यमानाः[7] शितायुधैः ।
गतासवो निपतिता नोत्तिष्ठेरन्स्म[8] भूयशः ॥१५॥
यदा दुर्वाससः[9] शापात्सेन्द्रा लोकास्त्रयो नृप ।
निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः १६
निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः ।
नाध्यगच्छन्स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम्॥१७॥
ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः ।
सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥

१ विज० मन्द्रद्रुतस्तत्र । वीर० मन्द्रद्रुमस्तस्य । २ विज० पयोब्धिं । ३ वीर० किंवान्य । विज० किमन्य । ४ वीर० संकीर्त्यमा । विज० त्वयेत्थं कथ्यमा । ५ वीर० नैव । ६ वीर० विष्णुरातेन संपृष्टो भगवान्बादरायणिः । ७ वीर० वध्यमानाः । ८ वीर० पुनश्च ते । ९ उभ० दुर्वासशापेन ।

स विलोक्येन्द्रवाय्वादीन्निःसत्त्वान्विगतप्रभान् ।
लोकानमङ्गलप्रायानसुरान्[1]यथा विभुः ॥ १९ ॥
समाहितेन मनसा संस्मरन्पुरुषं परम् ।
उवाचोत्फुल्लवदनो देवान्स भगवान्परः ॥ २० ॥
अहं भवो यूयमथोऽसुरादयो
मनुष्यतिर्यग्द्रुमघर्मजातयः ।
तस्यावतारांशकला विसर्जिता
व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥
न यस्य वध्यो न च रक्षणीयो
नोपेक्षणीयादरणीयपक्षः ।
अथापि सर्गस्थितिसंयमार्थं
धत्ते रजःसत्त्वतमांसि काले ॥ २२ ॥
अयं च[2] तस्य स्थितिपालनक्षणः
सत्त्वं जुषाणस्य भवाय देहिनाम् ।
तस्माद्व्रजामः शरणं जगद्गुरुं
स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥

**श्रीशुक उवाच—**

इत्याभाष्य सुरान्वेधाः सह देवैररिन्दम ।
अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥२४॥
तत्राऽदृष्टस्वरूपाय श्रुतपूर्वाय वै विभो[3] ।
स्तुतिमब्रूत[4] दैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥२५॥

**ब्रह्मोवाच—**

अविक्रियं सत्यमनन्तमाद्यं
गुहाशयं निष्कलमप्रतर्क्यम् ।
मनोऽग्रयानं वचसाऽनिरुक्तं
नमामहे देववरं वरेण्यम् ॥ २६ ॥
विपश्चितं प्राणमनोधियात्मना-
मर्थेन्द्रियाभासमनिद्रमव्रणम् ।
छायातपौ यत्र न गृध्रपक्षौ
तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥
अजस्य चक्रं त्वजयेर्यमाणं
मनोमयं पञ्चदशारमाशु ।

१ विज० प्रायान्सुरांश्चैव यथा । २ उभ० तु । ३ वीर० चाभि भोः । विज० चाभ्यधात् । ४ विज० मद्भुतदैवीभि ।

त्रिणाभि विद्युच्चलमष्टनेमि
यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥
य एकवर्णं तमसः परं त-
द्लोकमव्यक्तमनन्तपारम् ।
आसांचकारोपसुपर्णमेन-
मुपासते योगरथेन धीराः ॥ २९ ॥
न यस्य कश्चातितितर्ति मायां
यया जनो मुह्यति वेद नार्थम् ।
तं निर्जितात्मात्मगुणं परेशं
नमाम भूतेषु समं चरन्तम् ॥ ३० ॥
इमे वयं यत्प्रिययैव तन्वा
सत्त्वेन सृष्टा बहिरन्तराविः ।
गतिं न सूक्ष्मामृषयश्च विद्महे
कुतोऽसुराद्या इतरप्रधानाः ॥ ३१ ॥
पादौ महीयं स्वकृतेव यस्य
चतुर्विधो यत्र हि भूतसर्गः ।
स वै महापूरुष आत्मतन्त्रः
प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥
अंभस्तु यद्रेत उदारवीर्यं
सिध्यन्ति जीवन्त्युत वर्धमानाः ।
लोकास्त्रयोऽथाखिललोकपालाः
प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥
सोमं मनो यस्य समामनन्ति
दिवौकसां वै बलमन्ध आयुः ।
ईशो नगानां प्रजनः प्रजानां
प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥
अग्निर्मुखं यस्य तु जातवेदा
जातः क्रियाकाण्डनिमित्तजन्मा ।
अन्तःसमुद्रेऽनुपचन्स्वधातू-
न्प्रसीदतां नः स महाविभूतिः ॥ ३५ ॥
यच्चक्षुरासीत्तरणिर्देवयानं
त्रयीमयो ब्रह्मण एष धिष्ण्यम् ।
द्वारं च मुक्तेरमृतं च मृत्युः
प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥
प्राणादभूद्यस्य चराचराणां
प्राणः सहो बलमोजश्च वायुः ।
अन्वास्म सम्राजमिवानुगा वयं
प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥
श्रोत्राद्दिशो यस्य हृदश्च खानि
प्रजज्ञिरे खं पुरुषस्य नाभ्याः ।
प्राणेन्द्रियात्मासुशरीरकेतं
प्रसीदतां नः स महाविभूतिः ॥ ३८ ॥
बलान्महेन्द्रस्त्रिदशाः प्रसादा-
न्मन्योर्गिरीशो धिषणाद्विरिञ्चः ।
खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः
प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥
श्रीर्वक्षसः पितरश्छायायाऽऽस-
न्धर्मः स्तनादितरः पृष्ठतोऽभूत् ।
द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारा-
त्प्रसीदतां नः स महाविभूतिः ॥ ४० ॥
विप्रो मुखं ब्रह्म च यस्य गुह्यं
राजन्य आसीद्भुजयोर्बलं च ।
ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ
प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥
लोभोऽधरात्प्रीतिरुपर्य-
भूद्द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ।
भ्रुवोर्यमः पक्ष्मभवस्तु कालः
प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥
द्रव्यं वयः कर्म गुणान्विशेषं
यद्योगमायाविहितान्वदन्ति ।
भाव्यं प्रबुधापबाधं

---

१ विज० विद्युद्बलमष्टनेमिं । २ विज० सदलोक । ३ विज० सुपर्णपत्रं । ४ वीर० पथेन । ५ विज० नमामि । ६ विज० यत्कृपयैव । ७ विज० रन्तरं विभो । ८ उभ० स्वकृतैव । ९ वीर० स मे । १० उभ० जन्मा । ११ विज० समुद्रे पचतः स्व ।



१ विज० स्मृतस्य मृत्योः । २ विज० नाभेः । ३ विज० स्वशरीरबन्धुः । ४ वीर० गिरित्रो । ५ वीर० हर्षाद्विरिञ्चः । विज० ऽशरणाद्विरिञ्चः । ६ विज० मेढ्रतस्तु । ७ विज० विशोङ्घ्रेरभवंश्च शूद्राः । ८ विज० विहृताः पतन्ति । ९ उभ० प्रबुधावबोधं ।

प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥
नमोऽस्तु तस्मा उपशान्तशक्तये
स्वाराज्यलाभप्रतिपूरितात्मने ।
गुणेषु मायारचितेषु वृत्तिभि-
र्न सज्जमानाय नभस्वदूतये ॥ ४४ ॥
स त्वं नो दर्शयाऽऽत्मानमस्मत्करणगोचरम् ।
प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखांबुजम् ॥४५॥
तैस्तैः स्वेच्छाधृतै रूपैः कालेकाले स्वयं विभो ।
कर्म दुर्विषहं यन्नो भगवांस्तत्करोति हि ॥४६॥
क्लेशभूर्यल्पसाराणि कर्माणि विफलानि वा ।
देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥४७॥
नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ।
कल्पते पुरुषस्यैव स ह्यात्मा दयितो हितः ॥४८॥
यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥४९॥
नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ।
निर्गुणाय गुणेशाय सत्त्वस्थाय च सांप्रतम् ॥५०॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

स्तुतिप्रसन्नेन भगवता देवेभ्यः प्रत्यक्षीभवनं ॥ १ ॥ पुनरपरोक्षतो ब्रह्मणा भगवत्स्तुतिः ॥ २ ॥ भगवता श्रीनारायणेन देवान्प्रति असुरैः सह सन्धिं कृत्वा तत्साहाय्येन क्षीरोदधौ अमृतमथने आज्ञादानं ॥ ३ ॥ तदर्थं मन्दरपर्वतानयनं ॥ ४ ॥

**श्रीशुक उवाच—**
एवं स्तुतः सुरगणैर्भगवान्हरिरीश्वरः ।
तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः ॥ १ ॥
तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ।
नापश्यन्खं दिशः क्षोणिमात्मानं च कुतो विभुं ॥ २
विरिञ्चो भगवान्दृष्ट्वा सह शर्वेण तां तनुम् ।
स्वच्छां मरकतश्यामां कञ्जगर्भारुणेक्षणाम् ॥३॥
तप्तहेमावदातेन लसत्कौशेयवाससा ।
प्रसन्नचारुसर्वाङ्गीं सुमुखीं सुन्दरभ्रुवम् ॥ ४ ॥
महामणिकिरीटेन केयूराभ्यां च भूषिताम् ।
कर्णाभरणनिर्भातकपोलश्रीमुखांबुजाम् ॥ ५ ॥
काञ्चीकलापवलयहारनूपुरशोभिताम् ।
कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम् ६
सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ।
तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ।
सर्वामरगणैः साकं सर्वाङ्गैरवनिं गतैः ॥ ७

**ब्रह्मोवाच—**
अजातजन्मस्थितिसंयमाया-
गुणाय निर्वाणसुखार्णवाय ।
अणोरणिम्नेऽपरिगण्यधाम्ने
महानुभावाय नमोनमस्ते ॥ ८ ॥
रूपं तवैतत्पुरुषर्षभेज्यं
श्रेयोर्थिभिर्वैदिकतान्त्रिकेण ।
योगेन धातः सह नस्त्रिलोका-
न्पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ ॥ ९ ॥
त्वय्यग्र आसीत्त्वयि मध्य आसी-
त्त्वय्यन्त आसीदिदमात्मतन्त्रे ।

१ विज० नमः स्वभूतये । २ विज० प्रयतानां । ३ विज० चाग्रतो । ४ विज० भरणं लक्ष्म बिभ्रतं वनमालिनं । ५ विज० सितं ।

१ विज० नाधर्मः । २ विज० स्यैव । ३ विज० अजाय । ४ विज० कैश्च । ५ विज० भव विश्वमूर्ते । ६ विज० त्वय्यग्र आसीदिदमात्मतन्त्रे त्वमादिरन्तो जगतोस्य मध्यम् । घटस्य मृत्स्नेव परः परस्मात्त्वमेव चाशेषमशेषनाम ।

त्वमादिरन्तो जगतोऽस्य मध्यं
घटस्य मृत्स्नेव परः परस्मात् ॥ १० ॥
त्वं माययाऽऽत्माश्रयया स्वयेदं
निर्माय विश्वं तदनु प्रविष्टः ।
पश्यन्ति युक्ता मनसा मनीषिणो
गुणव्यवायेऽप्यगुणं विपश्चितः ॥ ११ ॥
यथाऽग्निमेधस्यमृतं च गोषु
भुव्यन्नमंबूद्यमने च वृत्तिम् ।
योगैर्मनुष्या अधियन्ति हि त्वां
गुणेषु बुद्ध्या कवयो वदन्ति ॥ १२ ॥
तं त्वां वयं नाथ समुज्जिहानं
सरोजनाभातिचिरेप्सितार्थम् ।
दृष्ट्वा गता निर्वृतिमद्य सर्वे
गजा दवार्ता इव गाङ्गमंभः ॥ १३ ॥
स त्वं विधत्स्वाखिललोकपाला
वयं यदर्थास्तव पादमूलम् ।
समागतास्ते बहिरन्तरात्म-
न्किं वान्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥
अहं गिरित्रश्च सुरादयो ये
दक्षादयोऽग्नेरिव केतवस्ते ।
किंवा विदामेश पृथग्विभाता
विधत्स्व शं नो द्विजदेवमन्त्रम् ॥ १५ ॥
श्रीशुक उवाच—
एवं विरिञ्चादिभिरीडितस्त-
द्विज्ञाय तेषां हृदयं तथैव ।
जगाद जीमूतगभीरया गिरा
बद्धाञ्जलीन्संवृतसर्वकारकान् ॥ १६ ॥
एक एवेश्वरस्तस्मिन्सुरकार्ये सुरेश्वरः ।
विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥१७॥
श्रीभगवानुवाच—
हन्त ब्रह्मन्नहो शंभो हे देवा मम भाषितम् ।
शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः १८
यात दानवदैतेयैस्तावत्सन्धिर्विधीयताम् ।
कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः ॥१९॥
अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे ।
अहिमूषकवद्देवा ह्यर्थस्य पदवीं गतैः ॥ २० ॥
अमृतोत्पादने यत्नः क्रियतामविलंबितम् ।
यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरोऽभवेत्॥२१॥
क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् २२
सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः ।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः २३
यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ।
न संरंभेण सिध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥
न भेतव्यं कालकूटाद्विषाज्जलधिसंभवात् ।
लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु॥
श्रीशुक उवाच—
इति देवान्समादिश्य भगवान्पुरुषोत्तमः ।
तेषामन्तर्दधे राजन्स्वच्छन्दगतिरीश्वरः ॥ २६ ॥
अथ तस्मै भगवते नमस्कृत्य पितामहः ।
भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः॥२७॥
दृष्ट्वाऽरीनप्यसंयत्ताञ्जातक्षोभान्स्वनायकान् ।
न्यषेधद्दैत्यराट् श्लोक्यः सन्धिविग्रहकालवित् २८
ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ।
श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥
महेन्द्रः श्लक्ष्णया वाचा सांत्वयित्वा महामतिः ।
अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥३०॥
तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ।
शंबरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥
ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ।
उद्यमं परमं चक्रुरमृतार्थे परन्तप ॥ ३२ ॥
ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः ।
नदन्त उदधिं निन्युः शक्ताः परिघबाहवः॥३३॥

१ विज० मंबूत्खनने तथोर्व्याः । २ वीर० ऽधियन्ति । विज० वयन्ति । ३ उभ० किंवाद्य । ४ विज० विधेमेश । ५ विज० देव मित्र । ६ विज० सर्वकामान् ।

१ वीर० यावद्दानव । विज० यातुधानश्च दैतेयैः । २ वीर० वस्पश्चादर्थस्य । ३ विज० नथ संपन्नाञ्जातक्ष्वेलां । ४ वीर० राड् श्लोक्यः । विज० राडुच्चैः । ५ विज० तेन्वरोचन्त । ६ वीर० परस्परं । ७ विज० मञ्जसोत्पाट्य ।

दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ।
अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥३४॥
निपतन्स गिरिस्तत्र बहूनमरदानवान् ।
चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥
तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ।
विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥
गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान् ।
ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा ॥३७॥
गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ।
आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥
अवरोप्य गिरिं स्कन्धात्सुपर्णः पततां वरः ।
ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ३९

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

अमृतमथनारंभः ॥ १ ॥ रुद्रेण विषपानं ॥ २ ॥

**श्रीशुक उवाच—**

ते नागराजमामन्त्र्य फलभागेन वासुकिम् ।
परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदाऽन्विताः॥१॥
आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह ।
हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥
तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम् ।
न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥
स्वाध्यायश्रुतसंपन्नाः प्रख्याता जन्मकर्मभिः ।
इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः ४
स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ।
कृतस्थानविभागास्त एवं कश्यपनन्दनाः ॥ ५ ॥
ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ।
मथ्यमानेऽर्णवे सोद्रिरनाधारो ह्यपोऽविशत् ॥६॥
ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन ।
ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ।
आसन्स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥
विलोक्य विघ्नेशविधिं तदेश्वरो
दुरन्तवीर्योऽवितथाभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं मह-
त्प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥
तमुत्थितं वीक्ष्य कुलाचलं पुनः
समुत्थिता निर्मथितुं सुरासुराः ।
दधार पृष्ठेन स लक्षयोजन-
प्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥
सुरासुरेन्द्रैर्भुजवीर्यवेपितं
परिभ्रमयन्तं गिरिमङ्ग पृष्ठतः ।
बिभ्रत्तदावर्तनमादिकच्छपो
मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥
तथाऽसुरानाविशदासुरेण
रूपेण तेषां बलवीर्यमीरयन् ।
उद्दीपयन्देवगणांश्च विष्णु-
र्दैवेन नागेन्द्रमबोधरूपः ॥ ११ ॥
उपर्यगेन्द्रं गिरिराडिवान्य
आक्रम्य हस्तेन सहस्रबाहुः ।
तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यै-
रभिष्टुवद्भिः सुमनोऽभिवृष्टः ॥ १२ ॥
उपर्यधश्चाऽऽत्मनि गोत्रनेत्रयोः
परेण ते प्राविशता समेधिताः ।
ममन्थुरब्धिं तरसा मदोत्कटा

१ विज० परिधाय । २ उभ० सुरा यत्ताः । ३ वीर० मथितुं तेऽमृतार्थिनः । विज० अमृतार्थे कुरूद्वह । ४ उभ० अमृतार्थे । ५ वीर० ते तु । ६ विज० विघ्नेशगतिं ।

१ वीर० भुजवेग । २ वीर० तदा । ३ विज० वृष्ट्या ।

महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥
अहीन्द्रसाहस्रकठोरदृङ्मुख-
श्वासाग्निधूमाहतवर्चसोऽसुराः ।
पौलोमकालेयबलील्वलादयो
दवाग्निदग्धाः [1]सरला इवाभवन् ॥ १४ ॥
देवांश्च तच्छ्वासशिखाहतप्रभा-
न्[2]धूम्राम्बरस्रग्वरकञ्चुकाननान् ।
समभ्यवर्षन्[3]भगवद्वशा घना
ववुः समुद्रोर्म्युपगूढवायवः ॥ १५ ॥
मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः ।
यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ॥१६
मेघश्यामः कनकपरिधिः कर्णविद्योतविद्यु-
न्[4]मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः ।
जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूक
मञ्जन्मग्ना प्रतिगिरिरिवाशोभता[5]थोद्धृताद्रिः ॥१७
निर्मथ्यमानादुदधेरभूद्विषं
महोल्बणं हालहला[6]ह्वमग्रतः ।
संभ्रान्तमीनोन्मकराहिकच्छ[7]पा-
त्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ १८ ॥
तदुग्रवेगं दिशिदिश्युपर्यधो
विसर्पदुत्सर्पदसह्य[8]मप्रति ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा
अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥
विलोक्य तं देववरं त्रिलोक्या
भवाय देव्या[9]ऽभिमतं मुनीनाम् ।
आसीनमद्रावपवर्गहेतो-
स्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥

**[10]प्रजापतय ऊचुः—**

देवदेव महादेव भूतात्मन्भूतभावन ।
त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥२१॥

त्वमेकः सर्व[1]जगत ईश्वरो बन्धमोक्षयोः ।
तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥२२॥
गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान्विभो ।
धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् २३
त्वं ब्रह्म परमं गुह्यं सदसद्भाव[2]भावनः ।
नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः २४
त्वं शब्दयोनिर्जगदादिरात्मा
प्राणेन्द्रियद्रव्यगुणस्वभावः ।
कालः क्रतुः सत्यमृतं च धर्म-
स्त्वय्यक्षरं यत्त्रिवृदामनन्ति ॥ २५ ॥
अग्निर्मुखं तेऽखिलदेवतात्मा
विदुर्लोकभवाङ्घ्रिपङ्कजम् ।
[3]कालं गतिं तेऽखिलदेवता[4]त्मनो
दिशश्च कर्णौ [5]रसनं जले[6]शम् ॥ २६ ॥
नाभिर्नभस्ते श्वसनं नभस्वा-
न्सूर्यश्च चक्षूंषि जलं स्म रेतः ।
परावरात्माश्रयणं तवाऽऽत्मा
सोमो मनो द्यौर्भगवञ्छिरस्ते ॥ २७ ॥
कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा
रोमाणि सर्वौषधिवीरुधस्ते ।
छन्दांसि साक्षात्तव सप्तधातव-
स्त्रयीमयात्मन् हृदयं सर्वधर्मः ॥ २८ ॥
मुखानि पञ्चोपनिष[8]दस्तवेश
यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ।
यत्तच्छिवाख्यं परमा[9]र्थतत्त्वं
देव स्वयंज्योतिरवस्थितिस्ते ॥ २९ ॥
छाया [10]त्वधर्मोर्मिषु यैर्विसर्गो
नेत्रत्रयं सत्त्वरजस्तमांसि ।
साङ्ख्या[11]त्मनः शास्त्रकृतस्तवेक्षा
छन्दोमयो देव ऋषिः पुराणः ॥ ३० ॥
न ते गिरित्राखिललोकपाल

---

१ विज० शलभा इवापतन् । २ विज० धूम्रांबर । ३ वीर० वर्षन्मघवद्वशा घना । ४ वीर० मूर्ध्नो क्रामन्वियति चलितस्रग्भरो । ५ विज० थो धृताद्रिः । ६ वीर० हलाख्य । ७ विज० कच्छपोत्तिमि । ८ विज० दसह्यवीर्य । ९ विज० देव्याऽभियुतं । १० विज० प्रजा ऊचुः ।

१ वीर० जगतामीश्वरः । २ उभ० भावनं । ३ विज० कालो गतिस्ते । ४ वीर० देवतात्मन् । ५ वीर० रसनां । ६ विज० जलेशः । ७ विज० द्रुहिणस्तवात्मा । ८ विज० पञ्चोपनिषत्तवेश । ९ उभ० परमात्म । १० विज० त्वधर्मो मृड । ११ वीर० साक्ष्यात्मनः । विज० साक्षान्मनुः ।

विरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च
सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥
कामाध्वरत्रिपुरकालगराद्यनेक-[1]
भूतद्रुहः क्षपयतः स्तुतये न तत्ते ।
यस्त्वन्तकाल[2] इदमात्मकृतं स्वनेत्र-
वह्निस्फुलिङ्गशिखया भसितं न वेद ॥ ३२ ॥
ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रि-[3]
द्वन्द्वं चरन्तमुमया तपसाऽभितप्तम् ।[4]
कत्थन्त उग्रपरुषं निरतं श्मशाने
ते नूनमूतिमविदंस्तव हातलज्जाः ॥ ३३ ॥[5]
तत्तस्य ते सदसतोः परतः परस्य
नाञ्जः[6] स्वरूपगमने प्रभवन्ति भूम्नः ।
ब्रह्मादयः किमुत संस्तवने वयं तु
तत्सर्गसर्गविषया अपि शक्तिमात्रम् ॥ ३४ ॥
एतत्परं प्रपश्यामो न परं ते[7] महेश्वर ।
मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ३५

श्रीशुक उवाच—
तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ।
सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम् ॥ ३६ ॥

शिव उवाच—
अहो बत भवान्येतत्प्रजानां पश्य वैशसम् ।
क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ॥ ३७ ॥
आसां प्राणपरीप्सूनां विधेयमभयं हि मे[1] ।
एतावान्हि प्रभोरर्थो यद्दीनपरिपालनम् ॥३८॥
प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ।
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥
पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ।
तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥४०॥

श्रीशुक उवाच-
एवमामन्त्र्य भगवान्भवानीं विश्वभावनः ।
तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥
ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥
तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ।
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥४३॥
तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥
निशम्य कर्म तच्छंभोर्देवदेवस्य मीढुषः ।
प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥४५॥
प्रस्कन्नं पिबतः पाणेर्यत्किंचिज्जगृहुः स्म तत् ।
वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे ॥४६॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

कामधेन्वाद्युत्पत्तिः ॥ १ ॥ महालक्ष्म्युत्पत्तिः तया भगवतो वरणं च ॥ २ ॥ अमृतकलशहस्तस्य धन्वन्तरेरुत्पत्तिः ॥३॥ असुरैरमृते हृते तद्वञ्चनार्थं भगवता मोहिनीरूपस्वीकारः ॥ ४ ॥

श्रीशुक उवाच—
पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥१॥
तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ।
यज्ञस्य देवयानस्य[2] मेध्याय हविषे नृप ॥ २ ॥
तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ।

---

१ विज० कालहराद्यनेक। २ विज० यत्त्वन्तकाल। ३ विज० तवेश। ४ विज० तपसेऽभि। ५ विज० ते भूतभूतिमविदंस्तव हीनलज्जाः। ६ विज० नान्तः। ७ वीर० नापरं ते।

१ वीर० हि नः। २ विज० देवपानस्य।

तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥३॥
तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम् ॥ ४ ॥
कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ।
तस्मिन्हरिः स्पृहां चक्रे वक्षोऽलंकरणे मणौ ॥५॥
ततोऽभवत्पारिजातः सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान् ॥६॥
ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥७॥
ततश्चाविरभूत्साक्षाच्छ्री रमा भगवत्परा ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा ८
तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ।
रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९ ॥
तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम् ।
मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुंभैर्जलं शुचि ॥१०॥
आभिषेचनिका भूमिराहरत्सकलौषधीः ।
गावः पञ्च पवित्राणि वसन्तो मधुमाधवौ ॥११॥
ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि ।
जगुर्भद्राणि गन्धर्वा नर्त्यश्च ननृतुर्जगुः ॥ १२ ॥
मेघा मृदङ्गपणवमुरजानकगोमुखान् ।
व्यनादयञ्छङ्खवेणुवीणास्तुमुलनिःस्वनान् ॥ १३
ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ।
दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥१४
समुद्रः पीतकौशेयवाससी समुपाहरत् ।
वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥१५
भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ।
हारं सरस्वती पद्ममजो नागाश्च कुण्डले ॥१६॥
ततः कृतस्वस्त्ययनोत्पलस्रजं
नदद्द्विरेफां परिगृह्य पाणिना ।
चचाल वक्त्रं सुकपोलकुण्डलं
सव्रीडहासं दधती सुशोभनम् ॥ १७ ॥
स्तनद्वयं चातिकृशोदरी समं
निरन्तरं चन्दनकुङ्कुमोक्षितम् ।
ततस्ततो नूपुरवल्गुसिञ्जितै-
र्विसर्पती हेमलतेव सा बभौ ॥ १८ ॥
विलोकयन्ती निरवद्यमात्मनः
पदं ध्रुवं चाव्यभिचारि सद्गुणम् ।
गन्धर्वयक्षासुरसिद्धचारण-
त्रैविष्टपेयादिषु नान्वविन्दत ॥ १९ ॥
नूनं तपो यस्य न मन्युनिर्जयो
ज्ञानं क्वचित्तच्च न सङ्गवर्जितम् ।
कश्चिन्महांस्तस्य न कामनिर्जयः
स ईश्वरः किं परतो व्यपाश्रयः ॥ २० ॥
धर्मः क्वचित्तत्र न भूतसौहृदं
त्यागः क्वचित्तत्र न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं
न हि द्वितीयो गुणसङ्गवर्जितः ॥ २१ ॥
क्वचिच्चिरायुर्न हि शीलमङ्गलं
क्वचित्तदप्यस्ति न वेद्यमायुषः ।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः
सुमङ्गलः कश्च न काङ्क्षते हि माम् ॥ २२ ॥
श्रीशुक उवाच—
एवं विमृश्याव्यभिचारिसद्गुणै-
र्वरं निजैकाश्रयतयाऽगुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं
रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २३ ॥
तस्यांसदेश उशतीं नवकञ्जमालां
माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ।
तस्थौ निधाय निकटे तदुरः स्वधाम
सव्रीडहासविकसन्नयनेन याता ॥ २४ ॥

---

१ विज० श्वेताभो । २ विज० हरिस्तं तु समग्रहीत् । वीर० हरन्भगवतो महिं । ३ वीर० ततो गजाः करिण्योष्टौ कौस्तुभश्चाभवन्नृप । पद्मरागे स्पहां चक्रे वक्षोलङ्करणे हरिः । विज० अयं श्लोको नास्ति । ४ उभ० विभूषणः । ५ वीर० निष्कग्रीवाः । ६ विज० तस्याश्चासन । ७ विज० मधुमाधवं । ८ विज० नार्यश्च । ९ विज० वीणा तुमुल । १० उभ० ।

१ विज० हैमलतेव । २ विज० पेशादिषु । ३ उभ० तस्य । ४ वीर० तस्य । विज० तच्च । ५ वीर० सुमङ्गलो यश्च । ६ विज० सद्गुणं पदं निजैकाश्रयि सद्गुणाश्रयं । ७ वीर० निजैराश्रयतोऽगुणाश्रयं । ८ विज० निवीय । ९ विज० भीता ।

तस्याः श्रियस्त्रिजगतो जनको जनन्या
वक्षो निवासमकरोत्परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५ ॥
शङ्खतूर्यमृदङ्गानां वादित्राणां पृथुः स्वनः ।
देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् २६
ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ।
ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २७ ॥
श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ।
शीलादिगुणसंपन्ना लेभिरे निर्वृतिं पराम् ॥२८॥
निःसत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः ।
यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः २९
अथाऽऽसीद्वारुणी देवी कन्या कमललोचना ।
असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ ३० ॥
अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ।
उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥ ३१ ॥
दीर्घपीवरदोर्दण्डः कंबुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥३२॥
पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ।
स्निग्धकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥३३॥
अमृतापूर्णकलशं बिभ्रद्वलयभूषितः ।
स वै भगवतः साक्षाद्विष्णोरंशांशसंभवः ॥३४॥
धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् ।
तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥३५॥
लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ।
नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ॥ ३६ ॥
विषण्णमनसो देवा हरिं शरणमाययुः ।
इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत् ।
माखिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ।
[इत्युक्त्वा सान्त्वयन्देवांस्तत्रैवान्तर्दधे हरिः ३७]
मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम् ।
अहंपूर्वमहंपूर्वं न त्वं न त्वमिति प्रभो ॥ ३८ ॥
देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः
सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३९ ॥
इति स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः ।
दुर्बलाः प्रबलान् राजन्गृहीतकलशान्मुहुः ॥४०॥
एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ।
योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४१ ॥
प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ।
समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४२ ॥
नवयौवननिर्वृत्तस्तनभारकृशोदरम्
मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥ ४३ ॥
बिभ्रत्स्वकेशभारेण मालामुत्फुल्लमल्लिकाम्
सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥ ४४ ॥
विरजांबरसंवीतनितंबद्वीपशोभया
काञ्च्या प्रविलसद्वल्गुचलच्चरणनूपुरम् ॥ ४५ ॥
सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः
दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ॥ ९ ॥

मोहिनीहस्ते अमृतपात्रसमर्पणं ॥ १ ॥ मोहिन्या दैत्यान्वञ्चयित्वा देवेभ्योऽमृतपरिवेषणं ॥ २ ॥

**श्रीशुक उवाच—**
तेऽन्योन्यतोऽसुराः पात्रं हरन्तस्त्यक्तसौहृदाः ।
क्षिपन्तो दस्युधर्माण आयान्तीं ददृशुः स्त्रियम् १
अहो रूपमहो धाम अहो अस्या नवं वयः ।

---

१ विज० स्वप्रजाः । २ वीर० च निःस्वनः । विज० पृथक् स्वनः । ३ विज० नील । ४ विज० अमृतस्य पूर्ण । ५ विज० अमृताहृतं । ६ वीर० अन्योन्यतः । ७ उभ० सुधापात्रं ।

१ वीर० मभ्ययुः । २ वीर० इदमर्धमधिकं । ३ विज० निष्पन्द । ४ विज० भूषणं । ५ विज० संवीतं चित्रं वध्वीयशोभया । ६ विज० स्फुटच्चरण । ७ विज० अत्राध्यायविच्छेदो नास्ति । ८ उभ० धर्मेण ह्यायान्तीं ।

इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ २ ॥
का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि।
कस्यासि वद वामोरु मथ्नन्तीव[1] मनांसि नः ॥३॥
न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ।
नास्पृष्टपूर्वां[2] जानीमो लोकेशैश्च[3] कुतो नृभिः ॥४॥
नूनं त्वं विधिना सुभ्रूः प्रेषिताऽसि शरीरिणाम्।
सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥५॥
सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि[4] ।
ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥६॥
वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ।
विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥७॥
इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ।
प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ८ ॥

**श्रीभगवानुवाच—**

कथं कश्यपदायादाः पुंश्चल्यां मयि संगताः ।
विश्वासं पण्डितो[5] जातु कामिनीषु न याति हि[6] ९
सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ।
सख्यान्याहुरनित्यानि नूत्नंनूत्नं विचिन्वताम् १०

**श्रीशुक उवाच—**

इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ।
जहसुर्भावगंभीरं ददुश्चामृतभाजनम् ॥ ११ ॥
ततो गृहीत्वाऽमृतभाजनं हरि-
र्बभाष ईषत्स्मितशोभया गिरा ।
यद्यभ्युपेतं क्व च साध्वसाधु वा
कृतं मया वो विभजे सुधामिमाम् ॥ १२ ॥
इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः[7] ।
अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ॥ १३ ॥
अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् ।
दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः १४
यथोपजोषं वासांसि परिधायाऽहतानि ते ।
कुशेषु प्राविशन्सर्वे प्रागग्रेष्वभिभूषिताः[8] ॥ १५ ॥
प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ।
धूपामोदितशालायां जुष्टायां माल्यदीपकैः[1] ॥१६॥
तस्यां नरेन्द्र करभोरुरुशद्दुकूल-[2]
श्रोणीतटाऽलसगतिर्मदविह्वलाक्षी ।
सा कूजती कनकनूपुरसिञ्जितेन
कुंभस्तनी कलशपाणिरथाविवेश ॥ १७ ॥
तां श्रीसखीं[3] कनककुण्डलचारुकर्ण-
नासाकपोलवदनां परदेवताख्याम् ।
संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन[4]
देवासुरा विगलितस्तनपट्टिकां ताम् ॥ १८ ॥
असुराणां सुधादानं सर्पाणामिव दुर्नयम् ।
मत्वा जातिनृशंसानां न तां व्यभजदच्युतः ॥१९
कल्पयित्वा पृथक्पङ्क्तीरुभयेषां जगत्पतिः ।
तांश्चोपवेशयामास स्वेषुस्वेषु[5] च पङ्क्तिषु ॥ २० ॥
दैत्यान् गृहीतकलशो वञ्चयन्नुपसंचरैः ।
दूरस्थान्पाययामास जरामृत्युहरां सुधाम् ॥२१॥
ते पालयन्तः समयमसुराः स्वकृतं[6] नृप ।
तूष्णीमासन्कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥२२॥
तस्यां कृतातिप्रणयाः प्रणयापायकातराः ।
बहुमानेन चाबद्धा नोचुः किंचन विप्रियम् ॥२३॥
देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।
प्रविष्टः[7] सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥२४॥
चक्रेण क्षुरधारेण जहार पिबतः शिरः ।
हरिस्तस्य कबन्धस्तु सुधयाऽप्लावितोऽपतत् ॥२५॥
शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ।
यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥२६॥
पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः ।
पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः[8] ॥२७॥
एवं सुरासुरगणाः समदेशकाल-
हेत्वर्थकर्ममतयोऽपि[9] फले विकल्पाः ।

१ विज० विघ्नतीव । २ विज० स्पृष्टपूर्वां तु जानीमः । ३ वीर० योगेशैश्च । ४ विज० भामिनि । ५ उभ० पण्डिता । ६ उभ० न यान्ति हि । ७ वीर० यूथपाः । ८ वीर० प्राक्कूलेष्वभि ।

१ विज० माल्यधूपकैः । वीर० माज्यदीपकैः । २ विज० लसद्दुकूल । ३ विज० श्रीमुखीं । ४ वीर० रुत्स्मयवीक्षितेन । ५ उभ० स्वासुस्वासु च । ६ वीर० तत्कृतं । ७ विज० प्रविश्य । ८ उभ० विभुः । ९ विज० योगगतयोपि ।

तत्रामृतं सुरगणाः फलमञ्जसाऽऽपु-
र्यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ २८ ॥
यद्युज्यतेऽसुवसुकर्ममनोवचोभि-
र्देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात्।
तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वा-
त्सर्वस्य तद्भवति मूलनिषेचनं यत्॥ २९ ॥

इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

दैत्यैर्मत्सराद्देवैस्सह युद्धारंभः ॥ १ ॥ पराजयत्सु देवेषु तद्रक्षणार्थं भगवत आविर्भावः ॥ २ ॥

**श्रीशुक उवाच—**

इति दानवदैतेया नाविदन्नमृतं नृप।
युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः ॥१॥
साधयित्वाऽमृतं राजन्पाययित्वा स्वकान्सुरान्
पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥
सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनन्दनाः।
अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ॥ ३ ॥
ततः सुरगणाः सर्वे सुधया पीतयैधिताः।
प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ॥ ४ ॥
तत्र दैवासुरो नाम रणः परमदारुणः।
रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ॥ ५ ॥
तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे।
समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥
शङ्खतूर्यमृदङ्गानां भेरीडमरिणां महान्।
हस्त्यश्वरथपत्तीनां नदतां निःस्वनोऽभवत् ॥७॥
रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः।
हया हयैरिभाश्चेभैः समसज्जन्त संयुगे ॥ ८ ॥
उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः।
केचिद्गौरमृगैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९ ॥
गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः।
शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥
शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः।
बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥
अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः।
सेनयोरुभयो राजन्विविशुस्तेऽग्रतोऽग्रतः ॥१२॥
चित्रध्वजपटै राजन्नातपत्रैः सितामलैः।
महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥
वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः।
स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥१४॥
देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन।
रेजतुर्वीरमालाभिर्यादसामिव सागरौ ॥ १५ ॥
वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः।
यानं वैहायसं नाम कामगं मयनिर्मितम् ॥१६॥
सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो।
अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥
आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः।
वालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये ॥ १८ ॥
तस्याऽऽसन्सर्वतो यानैर्यूथानां पतयोऽसुराः।
नमुचिः शंबरो बाणो विप्रचित्तिरयोमुखः ॥१९॥
द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः।
शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥
हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः।
तारकश्चक्रदृक् शुंभो निशुंभो जंभ उत्कलः ॥२१॥
अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः।

१ वीर० दृसाश्च। २ विज० ऽमृतं सुरान्। ३ विज० पदाश्रयाः। ४ जम० ऽभियुः।

१ विज० त्पुरस्तात्। २ विज० क्रियते च तस्मिन्सर्वस्य। ३ विज० अष्टमोऽध्यायः। ४ विज० विभ्राजन्बार्हे। ५ विज० वातोद्धूततमोष्णीषैस्सत्कृतैः। ६ वीर० ध्वनद्भि-र्वर्मै। ७ विज० वीचिमालाभि। ८ विज० सागरे।

बर्हणाश्वो निकुंभस्य कृशाश्वोऽथास्य सेनेजित् ।
युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनंगतः ॥२५॥
भार्याशतेन निर्विण्ण ऋषयोस्य कृपालवः ।
इष्टिं स्म वर्तयांचक्रुरैन्द्रीं ते सुसमाहिताः ॥२६॥
राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ।
दृष्ट्वा शयानान्विप्रांस्तान्पपौ मन्त्रजलं स्वयम् २७
उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥२८॥
राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ।
ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥
ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ।
युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥
कं धास्यति कुमारोयं स्तन्यं रोरूयते भृशम् ।
मां धाता वत्स मारोदीरितीन्द्रो देशिनीमदात्३१
न ममार पिता तस्य विप्रदेवप्रसादतः ।
युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥३२॥
त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ।
यस्मात्त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥३३॥
यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥
ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥
द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ।
धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥३६॥
यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥३७॥
शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ।
पुरुकुत्समंबरीषं मुचुकुन्दं च योगिनम् ।
तेषां स्वसारः पञ्चाशत्सौभरिं वव्रिरे पतिम् ॥३८॥
यमुनान्तर्जले मग्नस्तप्यमानः परं तपः ।

निर्वृत्तिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥३९॥
जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ।
सोऽप्याह गृह्यतां ब्रह्मन्कामं कन्या स्वयंवरे॥४०॥
स विचिन्त्याप्रियं स्त्रीणां जरठोऽयमसंमतः ।
वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥
साधयिष्ये तथाऽऽत्मानं सुरस्त्रीणामपीप्सितम् ।
किं पुनर्मनुजेन्द्राणामिति व्यवसितः प्रभुः॥४२॥
मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् ।
वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥४३॥
तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ।
ममानुरूपो नायं व इति तद्गतचेतसाम् ॥४४॥
स बह्वृचस्ताभिरपारणीय-
तपःश्रियाऽनर्घ्यपरिच्छदेषु ।
गृहेषु नानोपवनामलांभः-
सरस्सु सौगन्धिककाननेषु ॥ ४५ ॥
महार्हशय्यासनवस्त्रभूषण-
स्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलंकृतस्त्रीपुरुषेषु नित्यदा
रेमेऽनुगायद्द्विजभृंगवन्दिषु ॥ ४६ ॥
यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ।
विस्मितः स्तंभमजहात्सार्वभौमश्रियाऽन्वितम् ४७
एवं गृहेष्वभिरतो विषयान्विविधैः सुखैः ।
सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥४८॥
स कदाचिदुपासीन आत्मापह्नवमात्मनः ।
ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥४९॥
अहो इमं पश्यत मे विनाशं
तपस्विनः सच्चरितव्रतस्य ।
अन्तर्जले वारिचरप्रसङ्गा-
त्प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥

---

१ वीर० बर्हिणाश्वो । २ विज० सैनिजित् । ३ वीर० रैन्द्रीं स्म । ४ वीर० स्तन्ये । विज० स्तन्यो । ५ विज० मांधातर्वत्स । ६ वीर० श्वोपि । ७ वीर० त्रसदस्यु । ८ वीर० चास्य । ९ विज० यावच्चन्द्रः प्रतिष्ठति । १० वीर० मत्यां सुतान्नृपः । ११ विज० मज्जंस्तप्य ।

१ विज० प्रियः । २ विज० मनुजस्त्रीणां । ३ उभ० रवारणी । ४ विज० श्रिया विराजत्सपरिच्छदेषु । ५ विज० प्रसून । ६ वीर० सप्तद्वीपावनीपति । ७ वीर० न्वितः । ८ वीर० विविधैर्मुखैः । ९ वीर० संस्रावितं । विज० प्रस्रावितं ।

सङ्गं त्यजेत मिथुनव्रतिनां[1] मुमुक्षुः
सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि ।
एकश्चरन्रहसि चित्तमनन्त ईशे
युञ्जीत तद्व्रतिषु[2] साधुषु चेत्प्रसङ्गः ॥ ५१ ॥
एकस्तपस्व्यहमथांभसि मत्स्यसङ्गा-
त्पञ्चाशदा[3]समुत पञ्चसहस्रसर्गैः[4] ।
[illegible]
मायागुणैर्हृतमतिर्विषये[1]ऽर्थभावः ॥ ५२ ॥
एवं वसन्गृहे कालं विरक्तो न्यासमास्थितः ।
वनं जगामानुययुस्तत्पत्न्यः[2] पतिदेवताः ॥ ५३ ॥
तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्षणमात्मवान्[3] ।
सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥५४॥
ताः स्वपत्युर्महाराज निरीक्ष्याऽऽध्यात्मिकीं गतिम्
अन्वीयुस्तत्प्रभावेन अग्निं शान्तमिवार्चिषः ५५

इति श्रीमद्भागवते महापराणे नवमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥[4]

## सप्तमोऽध्यायः ॥ ७ ॥

मान्धातृवंश्यस्य हरिश्चन्द्रस्य कथा ॥ १ ।

**श्रीशुक उवाच—**
मान्धातुः[5] पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ।
पितामहेन[6] प्रवृतो यौवनाश्वश्च[7] तत्सुतः ।
हारीतस्तस्य[8] पुत्रोऽभून्मान्धातृप्रवरा इमे ॥ १
नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः[9] ।
तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥ २ ।
गन्धर्वानवधीत्तत्र[10] वध्यान्वै[11] विष्णुशक्तिधृत् ।
नागाल्लब्धवरः सर्पादभयं स्मरतामिदम्[12] ॥ ३ ।
त्रसद्दस्युः[13] पौरुकुत्सो योऽनरण्यस्य देहकृत् ।
हर्यश्वस्तत्सुतस्तस्मा[14]दरुणोऽथ त्रिबन्धनः[15] ॥ ४
तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ।
प्राप्तश्चाण्डालतां[16] शापाद्गुरोः कौशिकतेजसा ॥५ ।
सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ।
पातितोऽवाक्शिरा देवैस्तेनैव स्तंभितो बलात्
त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ।
यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ।
सोऽनपत्यो विषण्णात्मा नारदस्योपदेशत..
वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥८॥
यदि वीरो महाराज तेनैव त्वां यजे इति ।
तथेति वरुणेनास्य[5] पुत्रो जातस्तु रोहितः ॥९ ।
जातः सुतो[6] ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत्
यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति १०।
निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ।
दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥११।
जाता दन्ता यजस्वेति स प्रत्याहाथ सोऽब्रवीत्
यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति १:
पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ।
यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ।
पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ।
सान्नाहिको[7] यदा राजन्राजन्योऽथ पशुः शुचिः ।
इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ।
कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥ १५

१ विज० बृजिनान्मुमुक्षुः । २ उभ० तद्व्रतिषु । ३ विज० पञ्चाशताथ सुतपञ्चसहस्रसङ्गः । ४ वीर० वर्गः । ५ उभ० मान्धातृपुत्र । ६ विज० मातामहेन । ७ उभ० युवनाश्वस्तु । ८ उभ० हरितस्तस्य । ९ विज० चोरगैः । १० उभ० गन्धर्वान्सोव । ११ वीर० वध्यांस्तान्विष्णु । विज० वध्यश्वान्विष्णु । १२ उभ० मिमं । १३ वीर० त्रसदस्युः । १४ वीर० स्तस्मात्र्यरुणोथ । १५ उभ० त्रिबन्धुरः । १६ उभ०

१ वीर० विषयार्थं । २ वीर० स्वपत्न्याः । ३ वि० मात्मवित् । ४ विज० अत्राध्यायविच्छेदो नास्ति । ५ वि० वरुणेनोक्ते । ६ वीर० सुतस्त्वनेनाङ्ग । ७ विज० सान्नाहुकं

रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ।
प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ १६ ॥
पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥१७॥
भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ।
रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत्समाम्[1]१८
एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ।
अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह वृत्रहा।
षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ।
उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् ॥ २० ।
शुनःशेपं पशुं पित्रे प्रदाय समवन्दत[3] ।
ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ॥ २१ ॥
मुक्तोदरोऽयजद्देवान्वरुणादीन्महत्कथः[1] ।
विश्वामित्रोऽभवत्तस्मिन्होता चाध्वर्युरात्मवान्२२
जमदग्निरभूद्ब्रह्मा वसिष्ठोऽयास्य सामगः ।
तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम् २३॥
शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रचक्ष्यते[2] ।
सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः॥२४॥
विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ।
मनः पृथिव्यां तामद्भिस्तेजसाऽपोऽनिलेन तत् ।
खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि ।
तस्मिञ्ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन्२६
हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ।
अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥२७॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सप्तमोऽध्यायः ॥ ७

---

अथाष्टमोऽध्यायः ॥ ८

---

**श्रीशुक उवाच—**
हरितो रोहितसुतश्चंपस्तस्माद्विनिर्मिता ।
चंपापुरी सुदेवोऽतो विजयो यस्य चाऽऽत्मजः॥ १ ॥
भरुकस्तत्सुतस्तस्माद्वृकस्तस्यापि बाहुकः ।
सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत्॥ २ ॥
वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती ।
और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता॥ ३ ॥
आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह ।
सह तेनैव संजातः सगराख्यो महायशाः ॥ ४ ॥
सगरश्चक्रवर्त्यासीत्सागरो यत्सुतैः कृतः ।
यस्तालजङ्घान्यवनाञ्छकान्हैहयबर्बरान् ॥ ५ ॥
नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः ।
मुण्डाञ्छ्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुण्डितान् ६
अनन्तवाससः कांश्चिदबाहवाससापरान् ।
सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥
और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ।
तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८
सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ।
हयमन्वेषमाणास्ते समन्तान्न्यखनन्महीम् ॥ ९
प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके
एष वाजिहरश्चोर आस्ते मीलितलोचनः ॥१
हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ।
उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥११
स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ।
महद्व्यतिक्रमहता भस्मसादभवन्क्षणात् ॥ १२
न साधुवादो मुनिकोपभर्जिता
नृपेन्द्रपुत्रा इति सत्त्वधामनि ।
कथं तमो रोषमयं विभाव्यते

---

१ वीर० ऽवसत्समाः । विज० ऽचरत्समाः । २ वीर० तार्तीये । ३ वीर० समविन्दत । ४ विज० रोहिताद सी- चंपः । ५ वीर० भेरुकः । विज० तरुकः । ६ वीर० भगारुयः । विज० ...

१ विज० न्महाक्रतौ । २ वीर० त्प्रवक्ष्यते । ३ ...जमांभो । ४ विज० ...

जगत्पवित्रात्मनि खे रजोभुवः ॥ १३ ॥
यस्येरिता साङ्ख्यमयी दृढेह नौ-
र्यया मुमुक्षुस्तरते दुरत्ययम् ।
भवार्णवं मृत्युपथं विपश्चितः
परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥
योऽसमञ्जस इत्युक्तः स केशिन्यां नृपात्मजः ।
तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ।
असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ।
जातिस्मरः पुरा सङ्गाद्योगी योगाद्विचालितः १६
आचरन्गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ।
सरय्वां क्रीडतो बालान्प्रास्यदुद्वेजयञ्जनम् ॥१७।
एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ।
योगैश्वर्येण बालांस्तान्दर्शयित्वा ततो ययौ ॥१८।
अयोध्यावासिनः सर्वे बालकान्पुनरागतान् ।
दृष्ट्वा विसिस्मिरे राजन्राजा चाप्यन्वतप्यत १९।
अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ ।
पितृव्यखातानुपथं भस्मान्ति ददृशे हयम् ॥२०।
तत्राऽऽसीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ।
अस्तौत्समाहितमनाः प्राञ्जलिः प्रणतो महान् ।

**अंशुमानुवाच—**

न पश्यति त्वां परमात्मनोऽजनो
न बुध्यतेऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनःशरीरधी-
विसर्गसृष्टा वयमप्रकाशाः ॥ २२ ॥
ये देहभाजस्त्रिगुणप्रधाना
गुणान्विपश्यन्त्युत वा तमश्च ।
यन्मायया मोहितचेतसस्ते
विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥
तं त्वामहं ज्ञानघनं स्वभाव-
प्रध्वस्तमायागुणभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं
कथं हि मूढः परिभावयामि ॥ २४ ॥
प्रशान्तमायागुणकर्मलिङ्ग-
मनामरूपं सदसद्विमुक्तम्
ज्ञानोपदेशाय गृहीतदेहं
नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥
त्वन्मायारचि[illegible] वस्तुबुद्ध्या गृहादिषु ।
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥[illegible]
अद्य नः सर्वभूतात्मन्कामकर्मेन्द्रियाशयः ।
मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥[illegible]

**श्रीशुक उवाच—**

इत्थं गीतानुभावस्तं भगवान्कपिलो मुनिः ।
अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥ २८

**श्रीभगवानुवाच**

अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ।
इमे च पितरो दग्धा गङ्गांभोऽर्हन्ति नेतरत् ।
तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ।
सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३०
राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबन्धनः
औवोंपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३[illegible]

[illegible]ति श्रीमद्भागवते महापुराणे नवमस्कन्धे अष्टमोऽध्यायः ॥ ८ ।

१ वीर० भयं । २ वीर० परात्मनस्तस्य । ३ वी[illegible] भस्मान्ते । वि[illegible]

१ विज० स्वभावप्रध्वस्त । २ विज० गृहीतलिङ्गं । ३ [illegible] द्रियाशयः । ४ विज० हंति । ५ विज० मंशुमते । ६ [illegible] अत्राध्यायविच्छेदो नास्ति ।

# नवमोऽध्यायः ॥ ९ ॥

सगरप्रपौत्रेण भगीरथेन प्रार्थितया गङ्गया भूमाववतरणं ॥ १ ॥ मदयन्तीपतेः कल्माषपादस्य कथा ॥ २ ॥ खट्वाङ्गपर्यन्तं तद्वंशवर्णनं ॥ ३ ॥

**श्रीशुक उवाच—**

अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया[1]।
कालं महान्तं नाशक्नोत्ततः कालेन संस्थितः ॥१॥
दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान्।
भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः[2] ॥ २ ॥
दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते।
इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः ॥ ३ ॥
कोऽपि धारयिता[3] वेगं पतन्त्या मे महीतले।
अन्यथा[4] भूतलं भित्त्वा नृप यास्ये रसातलम् ४॥
किंचाहं[6] न भुवं यास्ये नरा मय्यामृजन्त्यघम्।
मृजामि तदघं कुत्र[6] राजंस्तत्र विचिन्त्यताम्[7] ५॥

**भगीरथ उवाच—**

साधवो न्यासिनः[8] शान्ता ब्रह्मिष्ठा[9] लोकपावनाः।
हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते[10] ह्यघभिद्धरिः ॥ ६ ॥
धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम्।
यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥७॥
["इति[11] तस्य वचः श्रुत्वा गङ्गा तं पुनरब्रवीत्।
प्रसादय महेशानं धारणार्थं मदंभसाम् ॥१॥"]
इत्युक्त्वा[12] स नृपो देवं[13] तपसाऽतोषयच्छिवम्[14]।
कालेनाल्पीयसा राजंस्तस्येशः[15] समतुष्यत ॥८॥
तथेति राज्ञाऽभिहितं[16] सर्वलोकहितः शिवः।
दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ९ ॥
भगीरथः स राजर्षिर्निन्ये भुवनपावनीम्।
यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते॥१०॥
रथेन वायुवेगेन प्रयान्तमनुधावती।
देशान्पुनन्ती निर्दग्धानासिञ्चत्सगरात्मजान् ११
यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि।
सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः॥१२॥
भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः।
किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः॥१३॥
न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम्।
अनन्तचरणांभोजप्रसूताया भवच्छिदः ॥ १४ ॥
संनिवेश्य मनो यस्मिञ्छ्रद्धया मुनयोऽमलाः
त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम्१५
श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत्[1]।
सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥
ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात्[2]।
दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः॥१७॥
ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृप।
आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित्
वसिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥ १८ ॥

**राजोवाच—**

किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः।
एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥१९॥

**श्रीशुक उवाच—**

सौदासो मृगयां किञ्चिच्चरन् रक्षो जघान ह।
मुमोच[3] भ्रातरं[4] सोऽथ गतः प्रतिचिकीर्षया॥२०॥
स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे।
गुरवे भोक्तुकामाय पक्त्वा[5] निन्ये नरामिषम् २१
परिवेक्ष्यमाणं भगवान्विलोक्याभक्ष्यमञ्जसा।
राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि॥ २२ ॥
रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम्।

१ विज० गङ्गागमन। २ विज० भृशं। ३ वीर० कोनु धारयिता। विज० को विधारयिता। ४ वीर० न चेद्भूमि। ५ विज० दुर्गतिं। ६ वीर० क्वाहं विज० क्रूरं। ७ विज० विविच्यतां। ८ विज० निराशिषः। ९ वीर० धर्मिष्ठा। १० विज० सङ्गाद्ये प्राप्ताः स्वहृदा हरि। ११ वीर० अयमेकः श्लोक अधिकः। १२ वीर० तच्छ्रुत्वा। १३ विज० देवीं। १४ ऽऽराधय। १५ वीर० स्तस्येशानस्त्वतुष्यत। विज० स्तपसा वाऽऽश्वतुष्यत। १६ उभ० मिहितः।

१ वीर० नाभावरो। विज० नाभो वरो। २ वीर० मगान्नलात्। ३ विज० शुशोच। ४ वीर० भ्राता। ५ वीर० पक्वं।

सोऽप्यपोञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः॥२३
वारितो मदयन्त्याऽपो रुशतीः पादयोर्जहौ ।
दिशः खमवनीं सर्वं[1] पश्यञ्जीवमयं[2] नृपः ॥२४॥
राक्षसं भावमापन्नः पादे कल्माषतां गतः ।
व्यवायकाले ददृशे वनौकोदंपती द्विजौ ॥२५॥
क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ।
न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः२६
मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ।
देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् २७
देहोऽयं मानुषो राजन्पुरुषस्याखिलार्थदः ।
तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ २८ ॥
एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः ।
आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ।
सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ॥ २९ ॥
सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ।
कथमर्हति धर्मज्ञ वधं पितुरिवाऽऽत्मजः ॥३०॥
तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ।
कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान्॥३१॥
यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ।
न जीविष्ये विना[3] येन क्षणं च मृतकं यथा॥३२॥
एवं करुणभाषिण्या विलपन्त्या अनाथवत् ।
व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः३३
ब्राह्मणी वीक्ष्य [4]दिधिषुं पुरुषादेन भक्षितम् ।
शोचन्त्यात्मानमुर्वीशमशपत्कुपिता सती ॥३४॥
यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ।
तवापि मृत्युराधानादकृतप्रज्ञ[5] दर्शितः ॥ ३५ ॥
एवं मित्रसहं शप्त्वा पतिलोकपरायणा ।
तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं[6] गता ॥३६॥

विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ।
विज्ञाय[1] ब्राह्मणीशापं महिष्या स निवारितः ३७
तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः[2] ।
वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥३८॥
सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ।
जघ्नेऽश्मनोदरं तस्याः[3] सोऽश्मकस्तेन कथ्यते ३९
अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ।
नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ४०॥
ततो दशरथस्तस्मात्पुत्र ऐडविडस्ततः ।
राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ॥४१॥
यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः[4] ।
मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं संदधे मनः ॥ ४२ ॥
न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चाऽऽत्मजाः ।
न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ॥
न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ।
नापश्यमुत्तमश्लोकादन्यत्किञ्चन वस्त्वहम्॥४४॥
देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ।
न वृणे तमहं[5] कामं भूतभावनभावनः[6] ॥ ४५ ॥
ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ।
न विन्दन्ति प्रियं शश्वदात्मानं किमुतापरे ॥४६
अथेशमायारचितेषु सङ्गं
गुणेषु गन्धर्वपुरोपमेषु ।
रूढं प्रकृत्याऽऽत्मनि विश्वकर्तु-
र्भावेन हित्वा तमहं प्रपद्ये ॥ ४७ ॥
इति व्यवसितो बुद्ध्या नारायणगृहीतया ।
हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ४८
यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ।
भगवान्वासुदेवेति यं गृणन्ति हि सात्वताः ४९

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे[7] नवमोऽध्यायः ॥ ९ ॥

१ उभ० सर्वा । २ विज० मयी ३ वीर० विनाऽनेन । ४ विज० भर्तारं । ५ विज० रापातादकृत । ६ वीर० भर्तृगतिं ।

१ वीर० विज्ञाप्य । २ विज० प्रजां । ३ विज० तस्मात्सो । ४ विज० दुर्जयान् । ५ विज० ह्यवमं कर्म । ६ विज० भावनात् । ७ विज० अत्राध्यायविच्छेदो नास्ति ।

# दशमोऽध्यायः ॥ १० ॥

खट्वाङ्गवंशे दशरथात्मजत्वेनावतीर्णस्य श्रीरामचन्द्रस्य कथा ॥ १ ॥

**श्रीशुक उवाच—**

खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः ।
अजस्ततो[1] महाराजस्तस्माद्दशरथोऽभवत् ॥ १ ॥

तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः ।
अंशांशेन चतुर्धाऽगात्[2]पुत्रत्वं प्रार्थितः सुरैः ॥२॥

रामलक्ष्मणभरतशत्रुघ्ना[3] इति संज्ञया ।
तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः ।
श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ३ ॥

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो[4] यो हरीन्द्रानुजाभ्याम् । वैरूप्याच्छूर्पणख्याः प्रियविरहरुषा रोपितभ्रूविजृम्भ[5]त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोशलेन्द्रोऽवतीर्णः[6] ॥ ४ ॥

विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ।
पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ५ ॥

यो लोकवीरसमितौ धनुरैशमुग्रं
सीतास्वयंवरगृहे[7] त्रिशतोपनीतम् ।
आदाय बालगजलील इवेक्षुयष्टिं
सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥ ६ ॥

जित्वाऽनुरूपगुणशीलवयोऽङ्गरूपां[8]
सीताऽभिधां श्रियमुरस्यभिलब्धमानाम् ।
मार्गे व्रजन्भृगुपतेर्व्यनयत्प्ररूढं
दर्पं[9] महीमकृत[10] यस्त्रिरराजबीजाम् ॥ ७ ॥

यः सत्यपाशपरिवीतपितुर्निदेशं
स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ।
राज्यं[1] श्रियं प्रणयिनः सुहृदो निवासं[2]
त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ८ ॥

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धे-
स्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।
जघ्ने चतुर्दशसहस्रमपारणीय[3]-
कोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९ ॥

सीताकथाश्रवणदीपितहृच्छयेन
सृष्टं विलोक्य नृपते दशकन्धरेण ।
जघ्नेऽद्भुतैण[4]वपुषाऽऽश्रमतोऽपकृष्टो[*]
मारीचमाशु विशिखेन यथा कमुग्रः[5] ॥ १० ॥

रक्षोधमेन वृकवद्विपिनेऽसमक्षं
वैदेहराजदुहितर्यपयापितायाम् ।
भ्राता वने कृपणवत्प्रियया वियुक्तः
स्त्रीसङ्गिनां गतिमिति[6] प्रथयंश्चचार ॥ ११ ॥

दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन्कबन्धं
सख्यं विधाय कपिभिर्दयितागतिं तैः ।
बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यै-
र्वेलामगात्समनुजोऽजभवार्चिताङ्घ्रिः ॥ १२ ॥

यद्रोषविभ्रमविवृत्तकटाक्षपात-
संभ्रान्तनक्रमकरो भयगीर्णघोषः ।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी
पादारविन्दमुपगम्य बभाष एतत् ॥ १३ ॥

न त्वां वयं जडधियो नु[10] विदाम भूम-
न्कूटस्थमादिपुरुषं जगतामधीशम् ।
यत्सत्त्वतः[11] सुरगणा रजसः प्रजेशा

१ विज० अजस्तस्मान्महा । २ वीर० चतुर्भागा । ३ वीर० शत्रुघ्नभरता इति । विज० भरतशत्रुघ्नाश्चेति । ४ विज० पथि रुजो । ५ विज० विजृम्भः श्रुत्वाविर्बद्धसेतुः । ६ विज० ऽवतीर्णः । ७ विज० स्वयंवरसुखे त्रिदशोपनेयं । ८ विज० वयोनुरूपां । ९ वीर० स्वधि । १० विज० महीं कृतवतो हतराजबीजां ।

१ उभ० राज्यश्रियं । २ विज० धिवासं । ३ उभ० मवारणीय । ४ विज० जघ्ने कृतैण । ५ विज० यथारिमुग्रः । ६ वीर० गिनां रतिमिति । विज० गिनामिति रतिं । ७ विज० अयमेकः श्लोको नास्ति । ८ विज० तीव्रपरिवृत्त । वीर० विभ्रमनिवृत्त । ९ वीर० तं त्वां विभो । विज० तं त्वां वयं । १० उभ० न विदाम । ११ विज० त्वं सत्वतः सुरगणान्रजसः प्रजेशान्मन्योश्च ।

मन्योश्च भूतपतयः स भवान्गुणेशः ॥ १४ ॥
कामं प्रयाहि जहि विश्रवसोऽवमेहं
त्रैलोक्यरावणमवाप्नुहि वीरपत्नीम्[1] ।
बध्नीहि सेतुमिह ते यशसो वितत्यै
गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ १५ ॥
बद्धोदधौ रघुपतिर्विविधाद्रिकूटैः
सेतुं कपीन्द्रकरकंपितभूरुहाङ्गैः ।
सुग्रीवनीलहनुमत्प्रमुखैरनीकै-[2]
र्लङ्कां विभीषणदृशाऽऽविशदग्रदग्धाम्[3] ॥ १६ ॥
सा वानरेन्द्रबलरुद्धविहारकोष्ठ-
श्रीद्वारगोपुरसदोवलभीविटङ्का[4] ।
निर्भज्यमानधिषणध्वजहेमकुंभ-
शृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ १७ ॥
रक्षःपतिस्तदवलोक्य निकुंभकुंभ-
धूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ।
पुत्रं[5] प्रहस्तमतिकायविकंपनादी-[6]
न्सर्वानुगान्समहिनोदथ कुंभकर्णम् ॥ १८ ॥
तां यातुधानपृतनामसिशूलचाप-
प्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम्[7] ।
सुग्रीवलक्ष्मणमरुत्सुतगन्धमाद-
नीलाङ्गदर्क्षपनसादिभिरन्वितोऽगात्[8] ॥ १९ ॥
तेऽनीकपा रघुपतेरभिपत्य सर्वे
द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः[9] ।
जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः[10]
सीताऽभिमर्शहतमङ्गलरावणेशान्[11] ॥ २० ॥
रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट
आरुह्य यानकमथाभिससार रामम् ।
स्वःस्यन्दने द्युमति मातलिनोपनीते
विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥
रामस्तमाह पुरुषादपुरीष यन्नः
कान्ताऽसमक्षमसताऽपहृता श्ववत्ते[1] ।
त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य
यच्छामि[2] काल इव कर्तुरलङ्घ्यवीर्यः[3] ॥ २२ ॥
एवं क्षिपन्धनुषि सन्धितमुत्ससर्ज
बाणं सवज्रमिव तद्धृदयं बिभेद ।
सोऽसृग्वमन्दशमुखैर्न्यपतद्विमाना-[4][5]
द्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥
ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः ।
मन्दोदर्या समं तस्मिन्प्ररुदत्य उपाद्रवन्[6][7] ॥ २४ ॥
स्वान्स्वान्बन्धून्परिष्वज्य लक्ष्मणेषुभिरर्दितान्[8] ।
रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना २५
हा हताः स्म वयं नाथ लोकरावण रावण ।
कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥ २६ ॥
नैवं[9] वेद महाभाग भवान्कामवशं गतः ।
तेजोऽनुभावं सीताया येन नीतो दशामिमाम् २७
कृतैषा विधवा लङ्का वयं च कुलनन्दन ।
देहः कृतोऽन्नं[10] गृध्राणामात्मा नरकहेतवे ॥ २८ ॥

श्रीशुक उवाच—

स्वानां विभीषणश्चक्रे कोशलेन्द्रानुमोदितः ।
पितृमेधविधानेन यदुक्तं सांपरायिकम् ॥ २९ ॥
ततो ददर्श भगवानशोकवनिकाश्रमे[11] ।
क्षामां स्वविरहव्याधिं[12] शिंशपामूलमास्थिताम्[13] ३०
रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकंपत ।
आत्मसन्दर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ ३१ ॥
आरोप्याऽऽरुरुहे यानं भ्रातृभ्यां हनुमद्युतः ।
विभीषणाय भगवान्दत्त्वा रक्षोगणेशताम् ॥ ३२ ॥
लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम् ।
अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ३३ ॥
उपगीयमानचरितः शतधृत्यादिभिर्मुदा
गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलांबरम् ॥ ३४ ॥

---

१ वीर० विभूत्यै । २ वीर० त्प्रमुखैरनेकै । विज० त्प्र: खैर्नरेन्द्रैः । ३ विज० विशदाशु । ४ विज० सद्वार ५ विज० पुत्रान्प्रहस्त । ६ वीर० मर्कपनादी । ७ विज० जुष्टां । ८ उभ० ऽयात् । ९ विज० योधं । १० वीर० जघ्नुर्भृशं । ११ विज० रावणेशं ।

१ विज० स्वयं ते । २ विज० इच्छामि । ३ विज० मलङ्घ्य । ४ वीर० रपतद्विमाना । ५ वीर० वादिनि ६ विज० रक्षः । ७ वीर० तत्र । ८ वीर० तांस्तान्बन्धू ९ उभ० न वै वेद । १० विज० कृतोऽयं । ११ वीर० वनिकालये । १२ विज० व्याधेः । १३ उभ० माश्रितां ।

महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम् ।
भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ ३५ ॥
पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ।
नन्दिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः ३६॥
ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ।
स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ ३७ ॥
सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ।
श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥३८॥
पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ।
पादयोर्न्यपतत्प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ ३९ ॥
पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ।
तमाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ४०॥
रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ।
तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ४१॥
धुन्वन्त उत्तरासङ्गान्पतिं वीक्ष्य चिरागतम् ।
उत्तराः कोशला माल्यैः किरन्तो ननृतुर्मुदा ४२
पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ।
विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥४३॥
धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ।
अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ॥ ४४ ॥
पुष्पकस्थोऽन्वितः स्त्रीभिः स्तूयमानश्च वन्दिभिः ।
विरेजे भगवान्राजन्ग्रहैश्चन्द्र इवोदितः ॥ ४५ ॥
भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत्पुरीम् ।
प्रविश्य राजा भवनं गुरुपत्नीः स्वमातरम् ॥४६॥
गुरून्वयस्यावरजान्पूजितः प्रत्यपूजयत् ।
वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः ॥ ४७ ॥
पुत्रान्स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः ।
आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः॥
जटा निर्मुच्य विधिवत्कुलवृद्धैः समं गुरुः ।
अभ्यषिञ्चद्यथैवेन्द्रं चतुःसिन्धुजलादिभिः ॥४९॥
एवं कृतशिरःस्नानः सुवासाः स्रग्व्यलङ्कृतः ।
स्वलङ्कृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥५०॥
अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ।
प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ।
जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥५१॥
त्रेतायां वर्तमानायां कालः कृतसमोऽभवत् ।
रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥ ५२ ॥
वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः ।
सर्वे कामदुघा आसन्प्रजानां भरतर्षभ ॥ ५३ ॥
नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ।
मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे ॥५४॥
एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ।
स्वधर्मं गृहमेधीयं शिक्षयन्स्वयमाचरत् ॥ ५५ ॥
प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ।
धिया ह्रिया च भावज्ञा भर्तुः सीता हरन्मनः ५६

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे दशमोऽध्यायः ॥ १० ॥

१ विज० प्रत्युद्यताग्रजं । २ विज० कक्षैर्गजैश्चापि । ३ वीर० श्चोपायनोद्वहैः । विज० श्चागात्सदोद्यतैः । ४ वीर० रपतत्प्रेम्णा । ५ उभ० दृढं । ६ वीर० र्हत्तमाश्रये । विज० येऽभवंस्ततः । ७ विज० सङ्गं पति । ८ वीर० श्च । ९ विज० पुष्पकस्थैर्वृतस्त्वेभिः । १० विज० रिन्दुरिवो । ११ वीर० सोथ सोत्सवः ।

१ उभ० राजभवनं । २ विज० पत्नीश्च मातरं । ३ वीर० वयस्यानुचरा । ४ विज० यथायोग्यं प्रणेमतुः । ५ विज० पुत्रांस्तन्मातरस्तावत् । वीर० प्राप्यात्मजान्मातरः स्वान्प्राणां । ६ वीर० सुष्ठ्वलङ्कृतः । विज० सदलङ्कृतः । ७ उभ० क्षुत्तृड्-दुःख । ८ वीर० स्वधर्मान्गृहमेधीयान् । ९ वीर० न्व्रतमाचरत् । १० उभ० भिया । ११ विज० अष्टमोऽध्यायः ।

# एकादशोऽध्यायः ॥ ११ ॥

[illegible]

**श्रीशुक उवाच—**

भगवानात्मनाऽऽत्मानं राम उत्तमकल्पकैः[1] ।
सर्वदेवमयं देवमीज आचार्यवान्मखैः ॥ १ ॥
होत्रेऽददाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ।
अध्वर्यवे प्रतीचीं च उदीचीं सामगाय[2] सः ॥२॥
आचार्याय ददौ शेषां[3] यावती भूस्तदन्तरा ।
मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥३॥
इत्ययं तदलङ्कारवासोभ्यामवशेषितः[4] ।
तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥
ते तु ब्रह्मण्यदेवस्य[5] वात्सल्यं वीक्ष्य संस्तुतम्[6] ।
प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥
अप्रत्तं नस्त्वया किन्नु[7] भगवन्भुवनेश्वर ।
यन्नोन्तर्हृदयं[8] विश्य तमो हंसि स्वरोचिषा ॥६॥
नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ।
उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये[9] ॥ ७ ॥
कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ।
चरन्वाचो[10]ऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ।
नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ।
स्त्रीलोभी[11] बिभृयात्सीतां रामो नाहं भजे पुनः ।
इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः ।
पत्या भीतेन[12] सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥
अन्तर्वत्न्यागते काले यमौ[13] सा सुषुवे सुतौ ।
कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥
अङ्गदश्चित्रकेतुश्च[14] लक्ष्मणस्याऽऽत्मजौ[15] स्मृतौ ।
तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥१२॥
सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ।
गन्धर्वान्कोटिशो जघ्ने भरतो विजये दिशाम् ॥१३॥
तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ।
शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ।
हत्वा मधुवने[1] चक्रे मथुरां नाम वै पुरीम् ॥१४॥
मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ।
ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥१५॥
तच्छ्रुत्वा[2] भगवान्रामो रुन्धन्नपि धिया शुचः[3] ।
स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥१६॥
स्त्रीपुंप्रसंग एतादृक्सर्वत्र[4] त्रासमावहः ॥
अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः[5] ॥१७॥
तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः ।
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥
स्मरतां हृदि विन्यस्य विद्धं[6] दण्डककण्टकैः ।
स्वपादपल्लवं राम आत्मज्योतिरगात्ततः ॥१९॥
नेदं यशो रघुपतेः[7] सुरयाच्ञयात्त-
लीलातनोरधिकसाम्यविमुक्तधाम्नः[8] ।
रक्षोवधो जलधिबन्धनमस्त्रपूगैः[9]
किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥
यस्यामलं नृपसदस्सु यशोऽधुनाऽपि-
गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम्[10] ।
तन्नाकपाल[11]वसुपालकिरीटजु-
पादांबुजं रघुपतिं[12] शरणं प्रपद्ये ॥ २१ ॥
स यैः स्पृष्टोऽभिदृष्टो वा[13] संविष्टोऽनुगतोऽपि व

---

१ वीर० कल्पितैः । २ वीर० गायिने । ३ विज० इ[illegible]ा यावती । ४ वीर० सदलङ्कारान्वासोभ्या । विज० इत्य[illegible]त्स्वमलङ्कारं । ५ उभ० ब्राह्मणदेवस्य । ६ वीर० सत्सु त[illegible] विज० सज्जना । ७ विज० किंतु । ८ विज० यतोन्त[illegible]दे संविश्य । ९ विज० तलार्पिता । १० उभ० वच[illegible] । ११ उभ० स्त्रैणोहि । १२ विज० श्रुत्वा भीतेन । १३ वी[illegible]० यमौ । १४ वीर० श्चन्द्रकेतुश्च । विज० श्चक्रकेतुश्च । १५ वी[illegible]०

१ विज० मधुवनं । २ विज० अयं श्लोको नास्ति । ३ वी[illegible] शुचं । ४ वीर० एतावान्सर्वत्र । ५ विज० गृहमेधिन[illegible] ६ विज० विद्धं पद्ममिवांशुकैः । ७ विज० पतेरिह विश्[illegible]तैर्लीला । ८ विज० शान्त । ९ उभ० मस्त्रपाणेः । १० वि[illegible]गिभेन्द्रपाते । ११ विज० जुष्टं । १२ विज० रघुपते १३ विज० संविष्टो ।

कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः॥
पुरुषो रामचरितं श्रवणैरुपधारयन्।
आनृशंस्यपरो राजन्कर्मबन्धैर्विमुच्यते ॥ २३ ॥
राजोवाच—
कथं स[1] भगवान्रामो भ्रातॄन्वा[2] स्वयमात्मनः।
तस्मिन्वा[3] तेऽन्ववर्तन्त प्रजाः पौराश्च ईश्वरे २४॥
श्रीशुक उवाच—
अथाऽऽदिशद्दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः[4]।
आत्मानं दर्शयन्स्वानां पुरीमैक्षत सानुगः॥२५॥
आसिक्तमार्गां[5] गन्धोदैः करिणां मदशीकरैः।
स्वामिनं प्राप्तमालोक्य मत्तां[6] वा सुतरामिव॥२६॥
प्रासादगोपुरसभाचैत्यदेवगृहादिषु।
विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम्॥२७
पूगैः सवृन्तै[7] रंभाभिः पट्टिकाभिः[8] सुवाससाम्।
आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम्॥२८॥
तमुपेयुस्तत्रतत्र पौरा अर्हणपाणयः।
आशिषो युयुजुर्देव पाहीमां प्राक्त्वयोद्धृताम् २९
ततः[1] प्रजा वीक्ष्य पतिं चिरागतं
दिदृक्षयोत्सृष्टगृहा[2] स्त्रियो नराः।
आरुह्य हर्म्याण्यरविन्दलोचन-
मतृप्तनेत्राः कुसुमैरवाकिरन्॥ ३० ॥
अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः।
अनन्ताखिलकोशाढ्य[3]मनर्घ्योरुपरिच्छदम्॥३१॥
विद्रुमोदुंबरद्वारैर्वैदूर्यस्तंभपङ्क्तिभिः।
स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिक[4]भित्तिभिः॥३२॥
चित्रस्रग्भिः पट्टिकाभि[5]र्वासोमणिगणांशुकैः[6]।
मुक्ताफलैश्चिदुल्लासैः कान्त[7]कामोपपत्तिभिः॥३३
धूपदीपैः सुरभिभिर्मण्डितं पुष्पमण्डनैः[8]।
स्त्रीपुंभिः सुरसंकाशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥
तस्मिन्स भगवान्रामः स्निग्धया प्रिययेष्टया[9]।
रेमे स्वारामधीराणा[10]मृषभः सीतया किल॥३५॥
बुभुजे च यथाकालं[11] कामान्धर्ममपीडयन्।
वर्षपूगान्बहून्नॄणा[12]मभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एकादशोऽध्यायः[13] ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

अतीतानामनागतानां च रामवंश्यानां कथनं ॥ १ ॥

उवाच—
कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः।
पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत्ततः॥१॥
देवानीकस्ततोऽनीहः पारियात्रोऽथ[9] तत्सुतः।
ततो बलस्थलस्तस्माद्वज्रनाभोऽर्कसंभवः ॥ २ ॥
खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः।
ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः॥३॥
शिष्यः कौशल्य[14] आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः
योगं महोदयमृषिर्हृदयग्रन्थिभेदकम्[15] ॥ ४ ॥
पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत्।

---

१ वीर० कथं रामो जानपदान्भ्रातॄंश्चाविशदात्मनः। २ विज० भ्रातृबन्धुष्ववर्तत। ३ विज० प्रजास्त्वौरसवद्रामः कथं वा राम ईश्वरः। ४ वीर० द्दिग्वने। ५ विज० तूंश्च त्रिदशेश्वरः। ६ वीर० मत्तानां सुतरामिव। ७ वीर० संवृतरंभा। ८ विज० पालिकाभिः। ९ उभ० हीनः पारियात्रश्च।

१ विज० तं ताः। २ विज० दिदृक्षवोत्सृज्य। ३ विज० अनन्तगृहकोशा। ४ वीर० दान्तस्फटिक। विज० भ्राजत्स्फटिक। ५ वीर० पताकाभिः। ६ विज० गणांशुभिः। ७ विज० कान्तं। ८ विज० मण्डितैः पुष्पमण्डकैः। ९ विज० च्छया। १० विज० स्वारामचाराणा। ११ विज० यथा कामं कामं धर्मं। १२ विज० न्वहन्नृणामभिध्येयाङ्घ्रि। १३ विज० नवमोऽध्यायः। १४ विज० सकलमध्यात्मं। १५ उभ० भेदनं। विज० मरुत्सुतः।

सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः ॥५॥
योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ।
कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥
तस्मात्[1]प्रसुश्रुतस्तस्य सन्धि[2]स्तस्याप्यमर्षणः ।
म[3]हस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत ॥ ७ ॥
त[4]तः प्रसेनजित्तस्मात्तक्षको भविता पुनः ।
ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ ८ ॥
एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ।
बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ ९ ॥
उरु[5]क्रियस्ततस्तस्य वत्स[6]वृद्धो भविष्यति ।
प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः॥१०
सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ।
प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ११
भविता मरु[1]देवोऽथ सुनक्षत्रोऽथ पु[2]ष्करः ।
तस्यान्तरिक्षस्तत्पुत्रः सु[3]तपास्तदमित्रजित् ॥१२॥
बृहद्रा[4]जस्तु तस्यापि बर्हिस्तस्मात्कृत[5]ञ्जयः ।
रणञ्जयस्तस्य सुतः सं[6]जयो भविता ततः ॥१३॥
तस्मा[7]च्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ।
ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः ॥१४॥
र्णको[8] भविता तस्मात्सुरथस्तनयस्ततः ।
सुमित्रो नाम निष्ठान्त एते बार्हद्बलान्व[9]याः॥१५॥
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ१६

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्वा[10]दशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

इक्ष्वाकुतनयस्य निमेः कथाकथनपूर्वकं तद्वंशकथनं ॥ १ ॥

**श्रीशुक उवाच—**

निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ।
आरभ्य सत्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः १
तं निर्वर्त्याऽऽगमिष्यामि तावन्मां प्रतिपालय ।
तूष्णीमासीद्गृहपतिः सोपीन्द्रस्याकरोन्मखम्॥२॥
निमिश्च[7]लमिदं विद्वान्सत्रमारभताऽऽत्मवान् ।
ऋत्विग्भिरपरै[8]स्तावन्नागमद्यावता गुरुः ॥ ३ ॥
शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ।
अशपत्पतता[9]द्देहो निमेः पण्डितमानिनः ॥ ४ ॥
निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ।
तवापि पतता[11]द्देहो लोभाद्धर्ममजानतः ॥ ५ ॥
इत्युत्ससर्ज [12]स्वं देहं निमिरध्यात्मकोविदः ।
मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥
गन्धर्वस्तुषु तद्देहं निधाय मुनिसत्तमाः ।
समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥७॥
राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ।
तथेत्युक्ते निमिः प्राह माभून्मे देहबन्धनम् ॥८॥
यस्य योगं न वाञ्छन्ति वियोगभयकातराः ।
भजन्ति चरणांभोजं मुनयो हरिमेधसः ॥ ९ ॥
देहं [13]नावरुरुत्सेऽहं दुःखशो[14]कभयावह[15]म् ।

---

१ वीर० तस्मात्प्रसुः । सुतस्तस्य । विज० तस्मात्तु सुश्रुतस्तस्य । २ उभ० स्तस्यापि मर्षणः । ३ वीर० सुमहां-स्तत्सुत । ४ उभ० इदमर्धं नास्ति । ५ वीर० उरुक्षतः । विज० उरुक्षयः । ६ उभ० वत्सप्रीतो । ७ विज० निमिस्स-त्वविदां विद्वा । ८ वीर० न्नागतो यावता गुरुः । विज० द्यावत्तन्नागतो गुरुः । ९ उभ० पतता ।

१ वीर० मेरुदेवोथ । २ वीर० ऋक्षकः । विज० रुक्षकः । ३ वीर० सुतपः । ४ वीर० बृहद्वाजस्तु । विज० बृहद्रोजस्तु । ५ वीर० द्धनञ्जयः । ६ वीर० सृञ्जयो । ७ विज० च्छक्यो । ८ उभ० कुणको । ९ उभ० नृपाः । १० विज० दशमोऽ-ध्यायः । ११ उभ० पतता । १२ विज० तं देहं । १३ वीर० न वारुरुत्सेऽहं । १४ वीर० मोह । १५ उभ० श्रयं ।

सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥१०॥
देवा ऊचुः—
विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ।
उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ११
अराजकभयं नृणां मन्यमाना महर्षयः ।
देहं ममन्थुः स्म निमेः कुमारः समजायत ॥१२॥
जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः ।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता १३
तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः ।
ततः सुकेतुस्तस्यापि देवरातो महीपते ॥ १४ ॥
तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृत्पिता ।
सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥
मरोः प्रतीपकस्तस्माज्जातः कृतिरथो यतः ।
देवमीढस्तस्य सुतो विसृतोऽथ महाधृतिः॥१६॥
कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः।
स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥१७॥
ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ।
सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः॥
कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ।
धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥१९॥
कृतध्वजात्केशिध्वजः खाण्डिक्यस्तु मितध्वजात्
कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥२०॥
खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजादतः
भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः २१।
शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ।
ऊर्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः ॥२२॥
अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ।
ततश्चित्ररथो यस्य क्षेमधिर्मिथिलाधिपः ॥२३॥
तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः ।
आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः ॥ २४ ॥
वस्वनन्तोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ।
श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः ॥२५॥
शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ।
बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥ २६ ।
एते वै मैथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चन्द्रवंशकथनारंभः ॥ १ ॥ बृहस्पतिभार्यायां तारायां चन्द्राद्बुधोत्पत्तिः ॥ २ ॥ वैवस्वतमनुपुत्र्यां इलायां बुधादुत्पन्नस्य पुरूरवसः उर्वश्यां पुत्रोत्पत्तिः ॥ ३ ॥

श्रीशुक उवाच—
अथातः श्रूयतां राजन्वंशः सोमस्य पावनः ।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः॥१॥
सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ।
जातस्याऽऽसीत्सुतो धातुरत्रिः पितृसमो गुणैः॥२
तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल ।
विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥३॥
सोऽयजद्राजसूयेन विजित्य भुवनत्रयम् ।
पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात् ॥ ४ ॥

१ वीर० द्विदेहस्तु । २ वीर० सुकेश । ३ वीर० सुहृत्पिता । सुहृदो । ४ उभ० प्रतीन्धक । ५ उभ० कृतरथो । ६ उभ० विधृतोथ । ७ वीर० पुण्यकीर्तनाः । ८ वीर० तस्माद्दृग्भ्यो ।

१ वीर० तत्र । २ उभ० द्रुतः । ३ विज० ऊर्जकेतुः ४ विज० कुरुजित्सुतः । ५ वीर० सुतायु । ६ वीर० स्वसपार्श्वगः । ७ वीर० क्षेमाद्रि । विज० क्षेमापि । ८ उभ क्षेमरथ । ९ वीर० कृत्यरथः । १० वीर० श्वसनोथ ततः विज० वैवस्वतोथ । ११ वीर० सुवर्चा । विज० युयुधा १२ वीर० वीतिहव्यो । विज० वीरहव्यो । १३ वीर० विपुलाश्वो । १४ विज० एकादशोऽध्यायः । १५ उभ० षध्य्बुगर्भाणां । १६ वीर० योऽयज ।

यया स देवगुरुणा याचितोऽभीक्ष्णशो मदात्।
नात्यजत्तत्कृते जज्ञे सुरदानवविग्रहः॥ ५॥
शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम्।
हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः॥ ६॥
सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात्[3]।
सुरासुरविनाशोऽभूत्समरस्तारकामयः॥ ७॥
निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत्।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत्पतिः॥ ८॥
त्यजत्यजाऽऽशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः।
नाहं त्वां भस्मसात्कुर्यां स्त्रियं सान्तानिकः सति ९
तत्याज व्रीडिता तारा कुमारं कनकप्रभम्।
[तस्यां जज्ञे दस्युहन्ता कुमारः कनकप्रभः।]
स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च॥१०॥
ममायं न तवेत्युच्चैस्तस्मिन्विवदमानयोः।
पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता तु सा॥११॥
कुमारो मातरं प्राह कुपितोऽलीकलज्जया।
किं न वोचस्यसद्वृत्ते आत्मावद्यं वदाऽऽशु मे १२
[न त्वां तु भस्मसात्कुर्यामात्मावद्यविगूहिनीम्।
ब्रह्मा तं तु विनिर्भर्त्स्य क्षेप्तारं मातुरन्तिके॥१॥]
ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन्।
सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत्॥१३॥
तस्याऽऽत्मयोनिरकृत बुध इत्यभिधां नृप।
बुद्ध्या गंभीरया येन पुत्रेणापोडुराण्मुदम्॥१४॥
ततः पुरूरवा जज्ञे इलायां य उदाहृतः।
तस्य रूपगुणौदार्यशीलद्रविणविक्रमान्॥ १५॥
श्रुत्वोर्वशीन्द्रभवने गीयमानान्सुरर्षिणा।
तदन्तिकमुपेयाय देवी स्मरशरार्दिता॥ १६॥

१ वीर० स यदा। २ विज० सुतस्नेहा। ३ वीर० मन्वगात्। ४ विज० निवेदितोऽजोङ्गिरसा। ५ वीर० विश्वसृट्। ६ विज० वेत्नीं बृहस्पतिः। ७ वीर० गर्भं त्यजाशु। ८ वीर० मत्क्षेत्रे त्वाहितं। ९ उभ० सान्तानिके। १० विज० जनकप्रभं। ११ विज० इदमर्धमधिकं। १२ विज० पितरं मे वदाशु वै। १३ विज० अयमेकः श्लोक अधिकः। १४ विज० तमाहूय समप्राक्षीद्रहएव तु सान्त्वया। १५ वीर० सुतमग्रहीत्।

मित्रावरुणयोः शापादापन्ना नरलोकताम्।
निशम्य पुरुषश्रेष्ठं कंदर्पमिव रूपिणम्॥ १७॥
धृतिं विष्टभ्य ललना उपतस्थे तदन्तिके।
स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः।
उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः॥१८॥
राजोवाच-
स्वागतं ते वरारोहे आस्यतां करवाम किम्।
संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः १९
उर्वश्युवाच—
कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर।
यदङ्गान्तरमासाद्य च्यवते ह रिरंसया॥ २०॥
एतावुरणकौ राजन्न्यासौ रक्षस्व मानद।
संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः॥
घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात्।
विवाससं तत्तथेति प्रतिपेदे महामनाः॥ २२॥
अहो रूपमहो भावो नरलोकविमोहनम्।
को न सेवेत मनुजो देवीं त्वां स्वयमागताम् २३
तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः।
रेमे सुरविहारेषु कामं चैत्ररथादिषु॥ २४॥
रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया।
तन्मुखामोदमुषितो मुमुदेऽहर्गणान्बहून्॥ २५॥
अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान्समनोदयत्।
उर्वशीरहितं मह्यमास्थानं नाति शोभते॥२६॥
त उपेत्य महारात्रे तमसि प्रत्युपस्थिते।
उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया॥२७॥
निशम्याऽऽक्रन्दितं देवी पुत्रयोर्नीयमानयोः।
हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना॥२८॥
यद्विश्रंभादहं नष्टा हृतापत्या च दस्युभिः।
यः शेते निशि संत्रस्तो यथा नारी दिवा पुमान्॥

१ वीर० विहाय। २ वीर० ह्युपतस्थे। ३ उभ० तदन्तिकं। ४ वीर० संगच्छस्व। ५ विज० यदङ्गान्न रमा याति स दृष्टो हरिराश्रयः। ६ विज० न्यस्तौ। ७ वीर० रंस्येहं। ८ वीर० पुरुषव्याघ्रो। ९ उभ० ब्दऽगणा। १० वीर० आनेतुमुर्वशीं। ११ उभ० समचोदयत्। १२ उभ० महारात्रौ। १३ वीर० उर्वश्युरणकौ। १४ वीर० मायया। १५ वीर० तया।

[मुञ्चमुञ्चाश्वपसर बाहूमद्गात्रवेष्टितौ।[1]
अतीव कातरो हा त्वं मायया योनिलंपटः ॥१॥]
इति वाक्सायकैर्विद्धः प्रतोत्रैरिव कुञ्जरः।
निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा॥३०॥
ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः।[2]
आदाय मेषावायान्तं नग्नमैक्षत सा पतिम्॥३१॥
ऐलोऽपि शयने जायामपश्यन्विमना इव।[3]
तच्चित्तो विह्वलः शोचन्बभ्रामोन्मत्तवन्महीम् ३२[4]
स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः।[5]
पञ्च प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः ॥ ३३ ॥
अहो जाये तिष्ठतिष्ठ घोरे न त्यक्तुमर्हसि।[6]
मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै ॥३४॥[7]
सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया।[8]
खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम्३५[9]
उर्वश्युवाच—
मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाद्युर्वृका इमे।[10]
क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा३६
स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः।[11]
घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत॥३७॥
विधायालीकविस्रंभमज्ञेषु त्यक्तसौहृदाः।
नवंनवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः॥३८॥
संवत्सरान्ते हि भवानेकरात्रं मयेश्वर।
वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः३९
अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरम्।
पुनस्तत्र गतोऽब्दान्त उर्वशीं वीरमातरम् ॥४०॥
उपलभ्य मुदा युक्तः समुवास तया निशाम्।
अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥ ४१ ॥
गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति।
तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप।
उर्वशीं मन्यमानस्तां सोऽबुध्यत चरन्वने ॥४२॥[1]
स्थालीं न्यस्य वने गत्वा गृहानाध्यायतो निशि।[2]
त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्तत ॥ ४३ ॥
स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः।
तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥४४॥
उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम्।
आत्मानमुभयोर्मध्ये यत्तत्प्रजननं प्रभुः ॥ ४५ ॥
तस्य निर्मन्थनाज्जातो जातवेदा विभावसुः।
त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत्४६
तेनायजत यज्ञेशं भगवन्तमधोक्षजम्।
उर्वशीलोकमन्विच्छन्सर्वदेवमयं हरिम् ॥ ४७ ॥
एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ४८
पुरूरवस एवाऽऽसीत्त्रयी त्रेतामुखे नृप।
अग्निनाप्रजया राजा लोकं गान्धर्वमेयिवान् ४९

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥[3]

१ वीर० अयमेकः श्लोक अधिकः। २ वीर० विद्योतन्ते स्म। विज० प्रद्योतन्त स्वविद्युता। ३ विज० अभूत्। ४ उभ० विक्लबः। ५ वीर० रहस्यन्याश्च। ६ वीर० अयि जाये। ७ उभ० मन्त्रा अद्याप्यनिर्वृत्ता। ८ विज० सुदेवोयं। ९ वीर० त्वद्य। १० वीर० मामृथा पुरुषो। ११ वीर० दुर्मृष्टाः।

१ विज० नाबुध्यत। २ वीर० गृहांस्तत्रोषितो। विज० गृहानध्युषितो। ३ विज० द्वादशोऽध्यायः।

# पञ्चदशोऽध्यायः ॥ १५ ॥

पुरूरवसः पुत्राणां श्रुतायुप्रभृतीनां पञ्चानां वंशकथनं ॥ १ ॥ तत्र विजयवंशे गाधिराजस्योत्पत्तिः ॥ २ ॥ गाधिदौहित्राज्जमदग्नेर्भगवदंशस्य परशुरामस्योत्पत्तिः ॥ ३ ॥ परशुरामेण कार्तवीर्यार्जुनहननं ॥ ४ ॥

**श्रीशुक उवाच—**
ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः १
श्रुतायोर्वसुमान्पुत्रः सत्यायोश्च श्रुतञ्जयः[1] ।
रयस्य[2] सुत एकश्च जयस्य तनयोऽमितः[3] ॥ २ ॥
भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ।
तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ।
जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चाऽऽत्मजोऽजकः ३॥
ततः कुशः कुशस्यापि कुशांबुर्मूर्तयो[4] वसुः ।
कुशनाभश्च चत्वारो गाधिरासीत्कुशांबुजः[5] ॥४॥
तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ।
वरं विसदृशं मत्वा[6] गाधिर्भार्गवमब्रवीत् ॥ ५ ॥
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम्[7] ६
इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ।
आनीय दत्त्वा तानश्वानुपयेमे वराननाम्[8] ॥७॥
स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया
श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥
तावत्सत्यवती मात्रा स्वचरुं याचिता सती ।
श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे[9] मातुरदत्स्वयम्[10] ॥९॥
तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः[11] ।
घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः॥१०॥
प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ।
अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽभवत् ॥११॥
सा चाभूत्सुमहापुण्या कौशिकी लोकपावनी ।
रेणोः सुतां रेणुकां[12] वै जमदग्निरुवाह याम् ॥१२॥
तस्यां वै भार्गवऋषेः सुता वसुमदादयः ।
यवीयाञ्जज्ञ एतेषां राम इत्यभिविश्रुतः ॥१३॥
यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम् ।
त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम्१४
दुष्टं[1] क्षत्रं भुवो भारमब्रह्मण्यमनीनशत्[2] ।
रजस्तमोवृतमहन्फल्गुन्यपि कृतेंहसि ॥ १५ ॥
**राजोवाच—**
किं तदंहो भगवतो राजन्यैरजितात्मभिः ।
कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥१६॥
**श्रीशुक उवाच—**
हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ।
दत्तं नारायणस्यांशमाराध्य[3] परिकर्मभिः ॥१७॥
बाहून्दशशतं लेभे दुर्धर्षत्वमरातिषु ।
अव्याहतेन्द्रियौजःश्रीतेजोवीर्ययशोबलम्[4] ॥१८॥
योगेश्वरत्वमैश्वर्यं[5] गुणा यत्राणिमादयः ।
चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥
स्त्रीरत्नैरावृतः क्रीडन्नेवांभसि मदोत्कटः ।
वैजयन्तीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥२०॥
विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः ।
नामृष्यत्तस्य तद्वीर्यं वीरमानी दशाननः ॥२१॥
गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ।
माहिष्मत्यां संनिरुद्धो मुक्तो येन कपिर्यथा॥२२॥
स एकदा तु मृगयां विचरन्विपिने[6] वने ।
यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत्[7] ॥ २३ ॥
तस्मै स नरदेवाय मुनिरर्हणमाहरत् ।
ससैन्यामात्यवाहाय हविष्मत्या[8] तपोधनः ॥२४॥
स वीरस्तत्र[9] तद्दृष्ट्वा आत्मैश्वर्यातिशायनम् ।

१ वीर० धनञ्जयः । २ विज० रयस्याद्भुत । ३ वीर० विभुः । ४ वीर० कुशाम्बो धूर्तगो । विज० कुशाम्बुस्तनयो । ५ वीर० कुशाम्बतः । ६ वीर० दृष्ट्वा । ७ विज० कुशिकान्वयः । ८ विज० वराङ्गनाम् । ९ वीर० मन्वानया ।१० वीर० रदात्स्वयं । ११ विज० मकार्षि नः । १२ वीर० रेणुकाख्यां ।

१ उभ० दृप्तम् । २ उभ० मधार्मिकं । ३ वीर० नारायणांशांशं । ४ विज० वीर्यं । ५ विज० मैश्वर्यगुणा । ६ वीर० विजने । ७ वीर० रुपागमत् । ८ विज० हविर्धान्या । ९ विज० स वीरस्तस्य संदृष्ट्वा ।

तन्नाद्रियताग्निहोत्र्यां साभिलाषः स हैहयः॥२५।
हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ।
ते च माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात्२६
अथ राजनि निर्याते राम आश्रम आगतः ।
श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाऽहिरिवाऽऽहतः॥
घोरमादाय परशुं सतूणं चर्म कार्मुकम् ।
अन्वधावत दुर्धर्षो मृगेन्द्र इव यूथपम् ॥ २८
तमापतन्तं भृगुवर्यमोजसा
धनुर्धरं बाणपरश्वधायुधम् ।
ऐणेयचर्माबरमर्कधामभि-
र्युतं जटाभिर्ददृशे पुरीं विशन्
अचोदयद्धस्तिरथाश्वपत्तिभि-
र्गदासिबाणर्ष्टिशतघ्निशक्तिभिः
अक्षौहिणीः सप्तदशातिभीषणा-
स्ता राम [illegible]
यतोयतोऽसौ प्रहरत्परश्वधो
मनोऽनिलौजाः परचक्रसूदनः ।
ततस्ततश्छिन्नभुजोरुकन्धरा
निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३[illegible]
दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे
रणाजिरे रामकुठारसायकैः ।
विवृक्णचर्मध्वजचापविग्रहं
[illegible] हैहय आपतद्रुषा ॥ ३२ ॥

अथार्जुनः पञ्चशतेषु बाहुभि-
र्धनुःषु बाणान्युगपत्स संदधे
रामाय रामोऽस्त्रभृतां समग्रणी-
स्तान्येकधन्वेषुभिराच्छिनत्समम् ॥ ३३ ॥
पुनः स्वहस्तैरचलान्मृधेऽङ्घ्रिपा-
नुत्क्षिप्य वेगादभिधावतो युधि ।
भुजान्कुठारेण कठोरनेमिना
चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥
कृत्तबाहोः शिरस्तस्य गिरेः शृङ्गमिवाहरत् ।
हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५
अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ।
समुपेत्याऽऽश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥३६
स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ।
वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७
रामराम महाबाहो भवान्पापमकारषीत् ।
अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥ ३८ ॥
वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः ।
यया लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम् ॥ ३९
क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा
क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४०
राज्ञो मूर्धावसिक्तस्य वधो ब्रह्मवधाद्गुरुः ।
तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥ ४१

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

१ विज० तन्नाद्रियन्नग्निहोत्रीं । २ विज० मयोज[illegible] । ३ वीर० ते तां । विज० तां ते । ४ वीर० रामः स्वा[illegible] ममागतः । ५ विज० परशुं योजयामास । ६ विज० दुर्म[illegible] । ७ विज० बस्मात्प्रधाम । ८ विज० नृप । ९ विज० वर[illegible] । १०

१ विज० स्तानेकबद्धेषुभि । २ उभ० हसन्निव । ३ गिरिशृङ्ग । ४ वीर० सङ्ख्या त्वयुतं तदा । ५ वीर० [illegible] सवत्सां दुद्रुवुर्भयात् । ६ वीर० स्वकृतं कर्म तद्र[illegible] ७ वीर० मूर्धाभिषिक्तस्य । ८ विज० त्रयोदशोऽध्याय

# षोडशोऽध्यायः ॥ १६ ॥

परशुरामेण पित्राज्ञया मातू रेणुकायाः ज्येष्ठभ्रातॄणां च वधः ॥ १ ॥ परशुरामेण प्रसादितस्य जमदग्नेरनुग्रहेण मृतानां पुनरुज्जीवनं ॥ २ ॥ कार्तवीर्यार्जुनसुतै रामासन्निधाने जमदग्नेर्वधः ॥ ३ ॥ रामेण माहिष्मतीं गत्वा स्वपितृवधं व्याजीकृत्य दुष्टानां क्षत्रियाणां एकविंशतिकृत्वो वधः ॥ ४ ॥ गाधिराजस्य विश्वामित्रनामकपुत्रोत्पत्तिकथाकथनं । तस्य तपसा ब्राह्मण्यप्राप्तिकथनं ॥ ५ ॥ विश्वामित्रस्य वंशकथनं ॥ ६ ॥

**श्रीशुक उवाच—**

पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन ।
संवत्सरं तीर्थयात्रां[1] चरित्वाऽऽश्रममाव्रजत् ॥१॥
कदाचिद्रेणुका याता गङ्गायां पद्ममालिनम् ।
गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥
विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ।
होमवेलां न सस्मार[2] किंचिच्चित्ररथस्पृहा ॥ ३ ॥
कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ।
आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥४॥
व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ।
घ्नतैनां पुत्रकाः पापामित्युक्तास्ते[4] न चक्रिरे॥५॥
रामः संचोदितः पित्रा भ्रातॄन्मात्रा सहावधीत् ।
प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥६॥
वरेण च्छन्दयामास प्रीतः सत्यवतीसुतः ।
वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे॥७॥
उत्तस्थुस्ते कुशलिनो निद्रापाय[5] इवाञ्जसा ।
पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥
येऽर्जुनस्य सुता राजन्स्मरन्तः स्वपितुर्वधम् ।
रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥
एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते ।
वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥१०॥
दृष्ट्वाऽग्न्यगार आसीनमावेशितधियं मुनिम् ।
भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥
याच्यमानाः कृपणया राममात्राऽतिदारुणाः ।
प्रसह्य शिर उत्कृत्य निन्युस्ते[6] क्षत्रबन्धवः ॥१२॥
रेणुका दुःखशोकार्ता निघ्नन्त्यात्मानमात्मना ।
राम रामेहि[1] तातेति[2] विचुक्रोशोच्चकैः सती ॥१३॥
तदुपश्रुत्य दूरस्थो[3] हा रामेत्यार्तवत्स्वनम् ।
त्वरयाऽऽश्रममासाद्य ददृशे[4] पितरं हतम् ॥१४॥
तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः[5][6] ।
हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान्स्वर्गतो भवान्॥
विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ।
प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे ॥ १६ ॥
गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ।
तेषां[7] स शीर्षभी राजन्[8]मध्ये चक्रे महागिरिम् १७
तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ।
हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥
त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
स्यमन्तपञ्चके चक्रे शोणितोदान्ह्रदान्नव ॥१९॥
पितुः कायेन संधाय शिर आदाय बर्हिषि ।
सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥
ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ।
अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥२१॥
अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः ।
आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥
ततश्चावभृथस्नानविधूताशेषकिल्बिषः ।
सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥२३॥
स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ।
ऋषीणां मण्डले सोऽभूत्सप्तमो रामपूजितः॥२४॥
जामदग्न्योऽपि भगवान्रामः कमललोचनः ।
आगामिन्यन्तरे राजन्वर्तयिष्यति वै बृहत्॥२५॥
आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ।

---

१ विज० चर्या । २ वीर० स्वैक्षत । ३ वीर० विसस्मार । ४ विज० इत्युक्तास्तां न । ५ वीर० निद्राक्षय । ६ विज० जग्मुस्ते ।

१ विज० रामरामेति । २ वीर० ताताशु । ३ उभ० दूरस्था । ४ उभ०ददृशुः । ५ उभ० ते दुःख । ६ उभ० हिताः ७ विज० तस्यां । ८ विज० राज्ञां ।

उपगीयमानचरितः सिद्धगन्धर्वचारणैः ॥२६॥
एवं भृगुषु विश्वात्मा भगवान्हरिरीश्वरः ।
अवतीर्य परं भारं भुवोऽहन्बहुशो नृपान्[1] ॥२७॥
गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥२८॥
विश्वामित्रस्य चैवाऽऽसन्पुत्रा एकशतं नृप ।
मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ॥२९॥
पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ।
आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥३०॥
यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ।
स्तुत्वा देवान्प्रजेशादीन्[2]मुमुचे पाशबन्धनात् ॥३१॥
यो रातो देवयजने दैवैर्गाधिषु[3] तापसः ।
देवरात इति ख्यातः शुनःशेपः स भार्गवः[1] ३२
ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ।
अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः३३
सहोवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ।
यन्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ॥३४॥
ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि ।
विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम् ॥३५॥
एष वः कुशिका[2] वीरो देवरातस्तमन्वित ।
अन्ये चाष्टक[3]हारीतजयक्रतुमदादयः ॥ ३६ ॥
एवं कौशिकगोत्रं तु विश्वामित्रैः[4] पृथग्विधम् ।
प्रवरान्तरमापन्नं तद्धि[5] चैवं प्रकल्पितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे षोडशोऽध्यायः[6] ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

पुरूरवसो ज्येष्ठपुत्रस्य आयोर्नहुषादिपुत्रपञ्चकोत्पत्तिः ॥ १ ॥ नहुषव्यतिरिक्तानां चतुर्णां पुत्राणां वंशकथनं ॥ २ ॥

**श्रीशुक उवाच—**
यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ।
नहुषः क्षत्रवृद्धश्च रजी रंभश्च[4] वीर्यवान् ॥ १ ॥
अनेना इति राजेन्द्र शृणु[5] क्षत्रवृधोऽन्वयम् ।
क्षत्रवृद्धसुतस्याऽऽसन्सुहोत्रस्याऽऽत्मजास्त्रयः ॥२॥
काश्यः कुशो गृत्समद[6] इति गृत्समदादभूत् ।
शुनकः शौनको यस्य[7] बह्वृचप्रवरो मुनिः ॥ ३ ॥
काश्यस्य काशिस्तत्पुत्रो राष्ट्रो[8] दीर्घतमःपिता[9] ।
धन्वन्तरिर्दैर्घतम[10] आयुर्वेदप्रवर्तकः ॥ ४ ॥
यज्ञभुग्वासुदेवांशः स्मृत[11]मात्रार्तिनाशनः ।
तत्पुत्रः केतुमानस्य[12] जज्ञे भीमरथस्ततः ॥ ५ ॥
दिवोदासो द्युमांस्तस्मात्प्रतर्दन[7] इति स्मृतः ।
स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ।
तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
नालर्कादपरो राजन्मेदिनीं[8] बुभुजे युवा ॥ ७ ॥
अलर्कात्सन्तति[9]स्तस्मात्सुनीथोऽथ सुकेतनः ।
धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥ ८ ॥
धृष्टकेतुः[10] सुतस्तस्मात्सुकुमारः क्षितीश्वरः ।
वीतिहोत्रस्य[11] भर्गोऽतो भार्गभूमिरभून्नृपः ॥९॥
इतीमे काशयो[12] भूपाः क्षत्रवृद्धान्वयायिनः ।

१ वीर० नृप । २ वीर० जलेशादी । ३ विज० गाधिसुताय सः । ४ विज० राभश्च । ५ उभ० क्षत्रवृद्धान्वयं शृणु । ६ वीर० गृत्समद इति गृत्समदा । ७ वीर० यस्माद्बह्वृच । ८ विज० सुराष्ट्रो । ९ वीर० दीर्घतपःपिता । १० वीर० दीर्घतपादायु । विज० दीर्घतमस आयु । ११ विज० स्मृति । १२ उभ० न्यस्य ।

१ उभ० स्तु भार्गवः । २ विज० कौशिका । ३ वीर० चोष्णीक । ४ उभ० वैश्वामित्रैः । ५ वीर० तद्धि ह्येवं । विज० तद्धीत्येवं । ६ विज० अत्राध्यायविच्छेदो नास्ति । ७ वीर० प्रदर्शन । ८ उभ० राजा बुभुजे मेदिनीं युवा । ९ उभ० संनति । १० वीर० सत्यकेतोर्धृष्टकेतुः । ११ उभ० वीतिहोत्रोस्य । १२ विज० काश्यजा ।

रंभस्य रभसः पुत्रो गंभीरश्चाक्रियस्ततः ॥ १० ॥
तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ।
शुद्धस्ततः शुचिस्तस्मात्त्रिककुद्धर्मसारथिः ॥११॥
ततः शान्तरयो जज्ञे कृतकृत्यः स आत्मवान् ।
रजेः पञ्चशतान्यासन्पुत्राणाममितौजसाम् ॥१२॥
देवैरभ्यर्थितो दैत्यान्हत्वेन्द्रायाददाद्दिवम् ।
इन्द्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥१३॥
आत्मानमर्पयामास प्रह्रादाद्यरिशङ्कितः ।
पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ १४ ॥
त्रिविष्टपं महेन्द्राय यज्ञभागान्समाददुः ।
गुरुणा हूयमानेऽग्नौ बलभित्तनयात्रजेः ॥१५॥
अवधीद्भ्रंशितान्मार्गान्न कश्चिदवशेषितः ।
कुशात्प्रतिः क्षात्रवृद्धात्सञ्जयस्तत्सुतो जयः १६
ततः कृतः कृतस्यापि जज्ञे हर्यवनो नृपः ।
सहदेवस्ततो हीनो जयसेनस्तु तत्सुतः ॥१७॥
सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः ।
क्षत्रवृद्धान्वया भूपाः शृणु वंशं च नाहुषात् ॥१८॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

नहुषस्य यतिप्रभृतिपुत्रषट्कोत्पत्तिः ॥ १ ॥ द्वितीयपुत्रस्य ययातेः शर्मिष्ठादेवयानीभ्यां विवाहः ॥ २ ॥ तस्य यदुप्रभृतिपञ्चपुत्रोत्पत्तिः ॥ ३ ॥

**श्रीशुक उवाच—**
यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः ।
षडिमे नहुषस्याऽऽसन्निन्द्रियाणीव देहिनः ॥१॥
राज्यं नेच्छद्यतिः पित्रा दत्तं तत्परिणामवित् ।
यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥
पितरि भ्रंशिते स्थानादिन्द्राण्या धर्षणाद्द्विजैः ।
प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥
चतसृष्वादिशद्दिक्षु भ्रातॄन्भ्राता यवीयसः ।
कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥
**राजोवाच—**
ब्रह्मर्षिर्भगवान्काव्यः क्षत्रबन्धुश्च नाहुषः ।
राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥५॥
**श्रीशुक उवाच—**
एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ।
सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥६॥
देवयान्या पुरोद्याने पुष्पितद्रुमसंकुले ।
व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ॥ ७ ॥
ता जलाशयमासाद्य कन्याः कमललोचनाः ।
तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः ॥८॥
वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषस्थितम् ।
सरसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥९॥
शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ।
स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥१०॥
अहो निरीक्षतामस्या दास्याः कर्म ह्यसांप्रतम् ।
अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥
यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये ।

---

१ विज० राजस्य । २ वीर० श्च क्रतुस्ततः । विज० श्चक्रस्ततः । ३ उभ० ककुब्धर्म । ४ विज० रजा । ५ उभ० प्रह्लादात्करि । ६ उभ० रायाति । ७ विज० गरत्वं च । ८ विज० भ्रातॄन्गोभॄन्यवी । ९ उभ० प्रातिलोमिकः ।

१ वीर० कृशात्प्रीतिः । विज० प्रतिक्षत्रः क्षत्र । २ वीर० हर्यश्वको नृप । विज० वीर्यधनो नृप । ३ वीर० भीमो । ४ उभ० इमे शृणवथ नाहुषान् । ५ विज० चतुर्दशोऽध्यायः । ६ विज० जलाशयं समासाद्य । ७ विज० वृषे । ८ वीर० पुत्र्यास्तुपर्यधात् । ९ वीर० क्षतामस्मद्दास्याः । विज० क्षतां मह्यं दास्याः । १० विज० परस्य वै ।

धार्यते यैरिदं[1] ज्योतिः शिवः पन्थाश्च दर्शितः ॥
यान्वन्दन्त्युप[2]तिष्ठन्ते लोकनाथाः सुरेश्वराः ।
भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥१३॥
वयं तत्रापि भृगवः शिष्योऽस्या[3] नः पिताऽसुरः ।
अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती ॥ १४ ॥
एवं शपन्तीं[4] शर्मिष्ठा गुरुपुत्रीमभाषत ।
रुषा श्वसन्त्युरङ्गीव[5] धर्षिता दष्टदच्छदा ॥ १५ ॥
आत्मवृत्त[6]मविज्ञाय कत्थसे बहु भिक्षुकि ।
किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा १६
एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् ।
शर्मिष्ठा प्राक्षिपत्कूपे वाँस[7] आदाय मन्युना १७
तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ।
प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥१८॥
दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ।
गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥१९॥
तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ।
राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ॥२०॥
हस्तग्राहोऽपरो[8] मा भूद्गृहीतायास्त्वया हि मे ।
एष ईशकृतो वीर संबन्धो नौ न पौरुषः ॥२१॥
यदिदं कूपलग्नाया भवतो दर्शनं मम ।
न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ।
कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥ २२ ॥
ययातिरनभिप्रेतं दैवोपहृतमात्मनः ।
मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥
गते राजनि सा वीरे तत्र स्म रुदती पितुः ।
न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥
दुर्मना भगवान्काव्यः पौरोहित्यं विगर्हयन् ।
स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥
वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ।
गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि॥२६॥

१ विज० यैः परं ज्योतिः । २ वीर० यान्नमन्त्युप । विज० येऽपीदमुप । ३ वीर० शिष्यो नोस्याः पिता । ४ उभ० क्षिपन्तीं । ५ वीर० श्वसन्ती व्यालीव । विज० श्वसन्ती नागीव । ६ विज० वृत्ति । ७ वीर० वासश्चादाय । विज० वासस्त्वादाय । ८ वीर० ग्राहः परो ।

क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः ।
कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे[1]२७
तथेत्यवस्थिते प्राह देवयानी मनोगतम् ।
पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु२८
स्वानां तत्सङ्कटं वीक्ष्य तदर्थस्य च गौरवम् ।
देवयानीं पर्यचरत्स्त्रीसहस्रेण[2] दासवत् ॥ २९ ॥
नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशनाः ।
तमाह राजञ्छर्मिष्ठामाधास्तल्पे[3] न कर्हिचित् ३०
विलोक्यौशनसीं राजन्[4]शर्मिष्ठा सप्रजां क्वचित् ।
तमेव वव्रे रहसि सख्याः पतिमृतौ सती ॥३१॥
राजपुत्र्यार्थितोऽपत्ये धर्मं चाऽऽवेक्ष्य धर्मवित् ।
स्मरञ्छुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥
यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥३३॥
गर्भसंभवमासुर्या भर्तुर्विज्ञाय मानिनी[5] ।
देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥३४॥
प्रियामनुगतः कामी वचोभिरुपमन्त्रयन् ।
न प्रसादयितुं शेके पादसंवाहनादिभिः[6] ॥३५॥
शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ।
त्वां जरा विशतां मन्द विरूपकरणी नृणाम् ३६

**ययातिरुवाच—**

अतृप्तोऽस्म्यद्य कामानां ब्रह्मन्दुहितरि स्म ते ।
व्यत्यस्यतां यथाकामं वयसा योभिधास्यति॥३७॥
इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ।
यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥३८
मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ।
वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥३९॥

**यदुरुवाच—**

नोत्सहे जरसा स्थातुमन्तरा प्राप्तया[7] तव ।
अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति[8] पूरुषः ४०
तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ।

१ वीर० संत्यक्तुमुत्सहे । २ वीर० दासीव स्त्रीगणैः सह । ३ वीर० मधा । ४ विज० राज्ञी । वीर० राज्ञीं । ५ विज० भामिनी । ६ वीर० संमर्दनाभिः । ७ वीर० प्राप्तयाऽनघ । ८ वीर० [illegible] ।

प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥४१॥
अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ।
न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ॥४२॥
पूरुरुवाच—
को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् ।
प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम् ॥४३॥
उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः ।
अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥४४॥
इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ।
सोऽपि तद्वयसा कामान्यथावज्जुजुषे नृप ॥४५॥
सप्तद्वीपपतिः सम्यक् पितृवत्पालयन्प्रजाः ।
यथोपजोषं विषयाञ्जुजुषेऽव्याहतेन्द्रियः ॥४६॥
देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ।
प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥
अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥
यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः
नानेव भाति नाभाति स्वप्नमायामनोरथः॥४९॥
तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ।
नारायणमणीयांसं निराशीरयजत्प्रभुम् ॥ ५० ॥
एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ।
विदधानोऽपि नातृप्यत्सार्वभौमः कदिन्द्रियैः॥५१

इति श्रीमद्भागवते महापुराणे नवमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

भोगान्भुक्त्वा प्राप्तनिर्वेदेन ययातिना कनिष्ठं पुत्रं पूरुं राज्येऽभिषिच्य तपोवनगमनं ॥ १ ॥

श्रीशुक उवाच—
स इत्थमाचरन्कामान्स्त्रैणोपह्नवमात्मनः ।
बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥१॥
शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ।
धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥२॥
बस्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः ।
ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥
तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् ।
व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसी ॥ ४ ॥
सोत्तीर्य कूपात्सुश्रोणी तमेव चकमे किल ।
तया वृतं समुद्वीक्ष्य बह्वयोऽजाः कान्तकामिनीः॥
पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ।
स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥
तमेव प्रेष्ठतमया रममाणमजाऽन्यया ।
विलोक्य कूपसंविग्ना नामृष्यद्बस्तकर्म तत् ॥७॥
तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ।
इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ॥८॥
सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ।
कुर्वन्निडविडाकारं नाशक्नोत्पथि सन्धितुम् ॥९॥
तस्यास्तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा ।
लंबन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित् ॥१०॥
संबद्धवृषणः सोऽपि ह्यजया कूपलब्धया
कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥११॥
तथाऽहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः ।
आत्मानं नाभिजानामि मोहितस्तव मायया १२

१ वीर० प्रत्युदितः । २ उभ० नृपः । ३ विज० निर्वर्त्य तीर्थं उद्धृत्य । ४ उभ० रोधसि । ५ वीर० भेजुः । ६ विज० वकोविदं । ७ वीर० थ वृत ।

१ विज० जुजोषाव्या । २ वीर० सर्वयज्ञ । ३ उभ० त्प्रभुः। ४ विज० पञ्चदशोऽध्यायः । ५ विज० तमेवं व्रज्यतमया । ६ वीर० स चैवानुगतः। ७ वीर० कुर्वन्बिडिबिडाकारं। विज० कुर्वन्बिलिबिलाकारं । ८ उभ० तस्य तत्र । ९ वीर० स लब्ध । विज० संबद्ध ।.१० वीर० क्रीडन्कालं बहुविधं ।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥१३॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥
यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥१५॥
या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ।
तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् १६
मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥
पूर्णं वर्षसहस्रं मे विषयान्सेवतोऽसकृत् ।
तथाऽपि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥
तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निरहंकारश्चरिष्यामि मृगैः सह ॥१९॥
दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत् ।
संसृतिं चाऽऽत्मनाशं च तत्र विद्वान्स आत्मदृक् ॥
इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ।
दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥२१॥
दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ।
प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥२२॥
भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ।
अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ २३
आसेवितं वर्षपूगान्षड्वर्गं विषयेषु सः ।
क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥
स तत्र निर्मुक्तसमस्तसङ्ग
आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे
लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥
श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ।
स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितम् ॥२६॥
सा संनिवासं सुहृदां प्रपायामिव गच्छताम् ।
विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः ॥२७॥
सर्वत्र संगमुत्सृज्य स्वप्नौपम्येन भार्गवी ।
कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः २८
नमस्तुभ्यं भगवते वासुदेवाय वेधसे ।
सर्वभूताधिवासाय शान्ताय बृहते नमः ॥२९॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

पूरोर्वंशकथनं दुष्यन्ताच्छकुन्तलायां भरतोत्पत्तिः ॥ १ ॥

उवाच—
पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ।
यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥
जन्मेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः ।
प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥
तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ।
संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥३॥
ऋतेयुस्तस्य कुक्षेयुः स्थण्डिलेयुः कृतेयुकः ।
जलेयुः सन्ततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥
दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥५॥
ऋतेयोरन्तिभारोऽभूत्त्रयस्तस्याऽऽत्मजा नृप ।

१ वीर० न दुहन्ति । २ वीर० ध्रुवं । ३ वीर० न विविक्ता । ४ विज० मसद्विद्वान् । ५ वीर० प्रधन्वां । ६ विज० नमस्तुर्वै । ७ वीर० चारुसुतो । ८ वीर० शर्यातिस्तस्यां । विज० शंयातिस्तस्य । ९ वीर० रौद्राति ।

१ वीर० दिशां । २ विज० आम्रेडितं । ३ वीर० पदे परे । ४ उभ० मिवोदितं । ५ वीर० भूतनिवासाय । ६ विज० षोडशोऽध्यायः । ७ वीर० ऋतेयुस्तस्य कक्षेयुस्सलेयुश्च कृतेयुकः । जलेयुः संनतेयुश्च धर्मसत्यव्रतेयवः । ८ वीर० वनेयुश्चा । ९ वीर० ऋतेपो । १० वीर० रन्तिसारो । विज० रन्तिनारो ।

सुमतिर्ध्रुवो[1]ऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥६॥
तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ।
पुत्रोभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥७॥
दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्राऽऽसीनां स्वप्रभया मण्डयन्तीं रमामिव ॥८॥
विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ।
बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥
तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ।
पप्रच्छ कामसंतप्तः प्रहसन् श्लक्ष्णया गिरा १०॥
का त्वं कमल[2]पत्राक्षि कस्यासि हृदयङ्गमे ।
किं वा चिकीर्षितं त्वत्र भवत्या निर्जने[3] वने ११
व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ।
न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥१२॥
शकुन्तलोवाच—
विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद्भगवान्कण्वो वीर किं करवाम ते ॥१३॥
आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणं च नः ।
भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते १४
दुष्यन्त उवाच—
उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ।
स्वयं हि वृणते[4] राज्ञां कन्यकाः सदृशं वरम् १५
ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ।
गान्धर्वविधिना राजा देशकालविधानवित् १६
अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् १७
कण्वः कुमारस्य वने चक्रे समुचिताः क्रियाः ।
बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः १८
तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसंभूतं भर्तुरन्तिकमागमत् ॥ १९ ॥
यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ।
शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥२०॥
माता भस्त्रा पितुः पुत्रो येन[5] जातः स एव सः ।

१ वीर० स्मृति । २ उभ० कमलगर्भाभे । ३ उभ० विजने । ४ वीर० वृण्वते । ५ विज० यस्माज्जातः ।



भरस्व पुत्रं दुष्यन्त[1] माऽवमंस्थाः शकुन्तलाम् २१
रेतोधाः पुत्रो[2] नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला २२
[[3]भरस्व पुत्रं भरतं वासुदेवांशसंभवम् ।
ब्रह्मण्यं सत्यसन्धं च गुणज्ञं कीर्तिवर्धनम् ॥१॥
महोत्साहं स्थूललक्षं कृतज्ञं वृद्धसेवकम् ।
अशरीरवचः श्रुत्वा स्वीचकार तदाऽऽत्मजम् ॥२॥]
पितर्युपरते सोऽपि[4] चक्रवर्ती महायशाः
महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥
चक्रं दक्षिणहस्तेऽस्य पद्मकोशो[5]ऽस्य पादयोः ।
ईजे महाभिषेकेण सोऽभिषिक्तोधिराड्विभुः ॥२४॥
पञ्चपञ्चाशता[6] मेध्यैर्गङ्गायामनु वाजिभिः ।
मामतेयं[7] पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥
अष्टसप्ततिमेध्याश्वान्बबन्ध प्रददद्वसु[8] ।
भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ।
सहस्रं बद्वशो[9] यस्मिन्ब्राह्मणा गा विभेजिरे २६॥
त्रयस्त्रिंशच्छतं ह्यश्वान्बद्ध्वा विस्मापयन्नृपान् ।
दौष्यन्तिरत्यगान्मायां देवानां गुरुमाययौ[10] २७
मृगाञ्छुक्लदतः कृष्णान्हिरण्येन परीवृतान्[11] ।
अदात्कर्मणि मष्णारे[12] नियुतानि[13] चतुर्दश ॥२८॥
भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ।
नैवापुर्[14]नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा २९
किरातहूणान्यवनानन्ध्रान्कङ्कान्[15]खशाञ्छकान् ।
अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान्दिग्विजयेऽखिलान्[16]
जित्वा पुराऽसुरा[17] देवान्ये रसौकांसि भेजिरे ।
देवस्त्रियो रसां नीताः प्राणिभिः[18] पुनराहरत् ३१

१ उभ० दौष्यन्ति माव । २ वीर० पितरं पुत्रो नयत्येव यम । विज० पुत्रं नयति नरदेव यमक्षयं । ३ वीर० इदं श्लोकद्वयमधिकं । ४ विज० सोऽभूच्चक्र । ५ उभ० कोशश्च । ६ विज० शतैर्मेध्यैः । ७ उभ० दीर्घतमसं । ८ विज० प्रददे वसु । ९ वीर० बद्धशो । विज० द्वन्द्वशो । १० वीर० पुरुमायिनां । विज० पुरुमायया । ११ वीर० समावृतान् । विज० परिष्कृतान् । १२ वीर० मष्कारे । १३ विज० मिथुनानि । १४ विज० नोदायुर्नैव । १५ वीर० न्वङ्गाञ्शकान्कुषान् । १६ वीर० बलात् । १७ विज० ऽसुरान्देवा येन स्वौकांसि भेजिरे । १८ विज० पणिभिः ।

सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी।
समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥
स सम्राड् लोकपालाख्यमैश्वर्यमधिराट्श्रियम्।
चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह ॥३३॥
तस्याऽऽसन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः।
जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इतीरिते ॥३४॥
तस्यैवं वितथे वंशे तदर्थं यजतः सुतम्।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥
अन्तर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः।
प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ३६।
तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम्।
नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ॥३७।
मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ३८।
चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम्।
व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयं वितथेऽन्वये ॥३९।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

भरतवंशकथने रन्तिदेवचरित्रवर्णनं ॥ १ ॥ तद्वंशे केषांचित् मुद्गलशरद्वत् कृपप्रभृतीनां ब्राह्मणानामुत्पत्तिः ॥ २ ॥

**श्रीशुक उवाच—**
वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः।
महावीर्यो नरो गर्गः सङ्कृतिस्तु नरात्मजः ॥१॥
गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन।
रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥
वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः।
निष्किञ्चनस्य धीरस्य सकुटुंबस्य सीदतः ॥ ३ ॥
व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल।
घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥
कृच्छ्रप्राप्तकुटुंबस्य क्षुत्तृड्भ्यां जातवेपथोः।
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ५
तस्मै संव्यभजत्सोऽन्नमादृत्य श्रद्धयान्वितः।
हरिं सर्वत्र संपश्यन्स भुक्त्वा प्रययौ द्विजः ॥६॥
अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते।
विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥
याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः।
राजन्मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥
स आदृत्यावशिष्टं यद्बहुमानपुरस्कृतम्।
तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥९।
पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम्।
पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे १०
तस्य तां करुणां वाचं निशम्य विपुलश्रमाम्।
कृपया भृशसंतप्त इदमाहामृतं वचः ॥ ११ ॥
न कामयेऽहं गतिमीश्वरात्परा-
मष्टर्द्धियुक्तामपुनर्भवं वा।
आर्तिं प्रपद्येऽखिलदेहभाजा-
मन्तःस्थितो येन भवन्त्यदुःखाः ॥ १२ ॥
क्षुत्तृट्श्रमो गात्रपरिश्रमश्च
दैन्यं क्लमः शोकविषादमोहाः।
सर्वे निवृत्ताः कृपणस्य जन्तो-
र्जिजीविषोर्जीवजलार्पणान्मे ॥ १३ ॥

१ वीर० उभ० लोकपालानामै। २ वीर० चक्रं जायाः सुतान्प्राणा विज० चक्रं वास्खलितं। ३ उभ० सुतान्मन्योः। ४ विज० वीतवित्तस्य। ५ वीर० आदृतः। विज० आहृत्य। ६ वीर० भोक्तुकामस्य। ७ उभ० महीपतेः। ८ विज० तमभ्यागात्।

१ विज० बृहस्पतेः। २ विज० त्राता तु दुःखात्पितरौ ३ विज० मत्वा तं देवमात्मजं। ४ विज० सप्तदशोऽध्यायः ५ उभ० आतिथ्यावशिष्टं। ६ वीर० तस्य। ७ विज० तत्रैक। ८ वीर० तस्यापि करुणा वाचः। विज० तस्या तिकरुणां वाचं। ९ वीर० श्रमाः। १० उभ० मीश्वराणा ११ विज० महर्द्धि। १२ विज० मन्तस्थितां। १३ वीर० परिश्रमश्च। १४ उभ० जलार्पणेन।

इति[1] प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः ॥१४॥
तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ।
आत्मानं दर्शयांचक्रुर्माया[2] विष्णुविनिर्मिताः १५
स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः ।
वासुदेवे भगवति भक्त्या चक्रे नमः[3] परम् ॥१६॥
ईश्वरालंबनं चित्तं कुर्वतोऽनन्यराधसः[4] ।
माया गुणमयी राजन्स्वप्नवत्प्रत्यलीयत ॥ १७ ॥
तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ।
अभवन्योगिनः सर्वे नारायणपरायणाः ॥१८॥
गर्गाच्छिनिस्ततो गार्ग्यः[5] क्षत्राद्ब्रह्म ह्यवर्तत ।
दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः १९
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ।
बृहत्क्षत्रस्य पुत्रो[6]ऽभूद्धस्ती यद्धस्तिनापुरम् ॥२०॥
अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ।
अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः २१
अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।
बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥ २२ ॥
तत्सुतो विशदस्तस्य सेनजित्[7]समजायत ।
रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः २३
रुचिराश्वसुतः[8] पारः पृथुसेनस्तदात्मजः ।
पारस्य[9] तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥
[अंशुहो[10] नाम यस्तेषां ज्येष्ठो वै सत्यको नृप ।]
स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ।
स[1] योगी गवि भार्यायां विष्वक्सेनमधात्सुतम् २५
जैगीषव्योपदेशेन योगतन्त्रं चकार ह ।
उदक्स्वन[2]स्ततस्तस्माद्भल्लादो बार्हदीषवाः[3] ॥२६॥
यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ।
नाम्ना सत्यधृतिर्यस्य[4] दृढनेमिः सुपार्श्वकृत् ॥२७॥
सुपार्श्वात्सुमतिस्तस्य पुत्रः संनतिमांस्ततः[5]
कृतिर्हिरण्यनाभाद्यो योगं प्राप्य[7] जगौ स्म षट्[6] २८
संहिताः प्राच्यसाम्नां वै नीपो[8] ह्युग्रायुधस्ततः ।
तस्य क्षेम्यः[9] सुवीरोऽथ सुवीरस्य रिपुञ्जयः ॥२९॥
ततो बहुरथो[10] नाम पुरुमीढोऽप्रजोऽभवत् ।
नलिन्यामजमीढस्य नीलः शान्तिः सुतस्ततः ३०
शान्तेः सुशान्तिस्तत्पुत्रः पुरुजो[11]ऽर्कस्ततोऽभवत् ।
भर्म्याश्व[12]स्तनयस्तस्य पञ्चाऽऽसन्मुद्गलादयः ॥३१॥
यवीनरो बृहदिषुः कांपिल्यः संजयः[13] सुताः ।
भर्म्याश्वः[14] प्राह पुत्रा मे पञ्चानां रक्षणाय हि ३२
विषयाणामलमिमे इति पञ्चालसंज्ञिताः ।
मुद्गलाद्ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥३३॥
मिथुनं मुद्गला[15]द्भार्म्याद्दिवोदासः पुमानभूत् ।
अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ३४
तस्य सत्य[16]धृतिः पुत्रो धनुर्वेदविशारदः ।
शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥
शरस्तंबेऽपतद्रेतो मिथुनं तदभूच्छुभम् ।
कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ।
कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥३६॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एक[18]विंशोऽध्यायः ॥ २१ ॥

१ विज० एवं । २ उभ० मायां विष्णुविनिर्मितां । ३ उभ० मनः । ४ वीर० राधसा । ५ विज० गार्ग्यात्क्षत्रा । ६ विज० होत्रोस्माद्धस्ती । ७ वीर० फेनजित् । ८ वीर० सुतः प्राज्ञः । विज० सुतो याजः । ९ उभ० पारस्तत्तनयो । १० विज० इदमर्धमधिकं दृश्यते ।

१ वीर० योगीशो गवि । विज० योगेशो गवि । २ उभ० उदक्सेन । ३ विज० बार्हदीषवः । ४ वीर० स्तस्माद्दृढ । यस्माद्दृढ । ५ विज० सन्तति । ६ विज० द्विषट् । ७ वीर० प्राप्य । ८ वीर० तस्याप्युग्रायुधः सुतः । विज० नीपो ह्यौग्रायुधस्ततः । ९ वीर० क्षम्यः । १० विज० बहुतिथो नाम । ११ विज० पुराजोर्क । १२ विज० हर्म्याश्वस्तत्सुतस्तस्य । १३ वीर० सृञ्जयः सुताः । विज० सञ्जयस्ततः सुतः । १४ विज० हर्म्याश्वः । १५ विज० मुद्गलाचार्या । १६ विज० शतधृतिः । १७ विज० तच्छ्रुत्वा । १८ विज० अष्टादशोऽध्यायः ।

# द्वाविंशोऽध्यायः ॥ २२ ॥

द्रुपदजरासन्धयोर्वंशवर्णनं ॥ १ ॥ शन्तनूत्पत्तिः ॥ २ ॥ धार्तराष्ट्राणां पाण्डवानां चोत्पत्तिः ॥ ३ ॥ पाण्डववंशे अतीतानामनागतानां च कथनं ॥ ४ ॥

**श्रीशुक उवाच—**

मित्रेयुश्च[1] दिवोदासाच्च्यवनस्तत्सुतो नृप ।
सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥१॥
तस्य पुत्रशतं तेषां यवीयान्पृषतः सुतः ।
द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥
धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः[2] पञ्चालका इमे ।
योऽजमीढसुतो ह्यन्य[3] ऋक्षः[4] संवरणस्ततः ॥ ३ ॥
तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ।
परीक्षित्सुधनुर्जह्नुर्निषधाश्वः[5] कुरोः सुताः ॥ ४ ॥
सुहोत्रोऽभूत्सुधनुषश्च्यवनो[6]ऽथ ततः कृती ।
वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥
कुशांब[7]मत्स्यप्रत्यग्रचेदिपाद्याश्च[8] चेदिपाः ।
बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः[9] ॥ ६ ॥
जज्ञे सत्यहितो[10]ऽपत्यं पुष्पवांस्तत्सुतो जहुः ।
अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ७
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ।
जीवजीवेति क्रीडन्त्या जरासन्धो[11]ऽभवत्सुतः ८॥
ततश्च सहदेवोऽभूत्सोमापिर्यच्छ्रुतश्रवाः ।
परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥ ९ ॥
ततो विदूरथ[12]स्तस्मात्सार्वभौमस्ततोऽभवत् ।
जयसेन[13]स्तत्तनयो राधिको[14]ऽतोऽयुतो[15] ह्यभूत् ॥१०॥
ततश्च क्रोधन[16]स्तस्माद्देवातिथिरमुष्य च ।
ऋष्य[17]स्तस्य दिलीपोभूत्प्रतीपस्तस्य चाऽऽत्मजः ११
देवापिः शन्तनुस्तस्य बाह्लीक इति चाऽऽत्मजाः ।
पितृराज्यं परित्यज्य[18] देवापिस्तु वनं गतः ॥१२॥
अभवच्छन्तनू राजा प्राङ्महाभिषसंज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः १३
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ।
समा द्वादश तद्राज्ये[1] न ववर्ष यदा विभुः ॥१४॥
शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक् ।
राज्यं देह्यग्रजायाऽऽशु पुरराष्ट्रविवृद्धये ॥ १५ ॥
एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥ १६ ॥
वेदवादातिवादान्वै तदा[2] देवो ववर्ष ह ।
देवापिर्योगमास्थाय कलापग्राममाश्रितः[3] ॥१७॥
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ।
बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥१८॥
शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान् ।
सर्व[4]धर्मविदां श्रेष्ठो महाभागवतः कविः ॥१९॥
वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ।
शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः २०॥
विचित्रवीर्यश्चावरजो[5] नाम्ना चित्राङ्गदो हतः ।
यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥२१॥
वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ।
हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः २२
मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ।
विचित्रवीर्योऽथोवाह काशिराजसुते बलात् २३
स्वयंवरादुपानीते अंबिकाऽम्बालिके उभे[6] ।
तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥२४॥
क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् २५
गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं[7] नृप ।
तत्र[8] दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका२६

---

१ उभ० मित्रायुश्च । २ वीर० भर्म्याः । विज० हार्म्याः । ३ वीर० ह्यस्यत्वृक्षः । ४ विज० ऋक्षात्संवरण । ५ वीर० निषधश्च । ६ विज० श्चवनस्तत्सुतः । ७ विज० कुसुंभ । वीर० कुशांबु । ८ विज० वेदिषाद्याश्च । ९ वीर० चात्मजः । १० वीर० तस्य । ११ वीर० जरासन्धस्ततोऽभवत् । १२ वीर० विडूरथ । १३ उभ० जयत्सेन । १४ विज० राचीकोतो । १५ उभ० द्युमानभूत् । १६ विज० ततश्चक्रधनः । १७ उभ० ऋक्षस्तस्य । १८ उभ० समुत्सृज्य ।

१ उभ० तद्राष्ट्रे । २ उभ० ततो । ३ वीर० मास्थितः । ४ वीर० सच । ५ उभ० वीर्योऽवरजो । ६ वीर० च सः । ७ विज० सुतशतं । ८ विज० तेषां ।

शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ।
जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः २७॥
नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ।
द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् २८
युधिष्ठिरात्प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः २९
सहदेवसुतो राजञ्छ्रुतकर्मा तथाऽपरे ।
युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ३०॥
भीमसेनाद्धिडिंबायां काल्यां सर्वगतस्ततः ।
सहदेवात्सुहोत्रं तु विजयाऽसूत पार्वती ॥३१॥
करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ।
इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ।
मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥३२॥
तव तातः सुभद्रायामभिमन्युरजायत ।
सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥३३॥
परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ।
त्वं च कृष्णानुभावेन सजीवो मोचितोन्तकात् ॥
तवेमे तनयास्तात जनमेजयपूर्वकाः ।
श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥ ३५ ॥
जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ।
सर्पान्वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ३६
कावषेयं पुरोधाय तुरं तुरगमेधयाट् ।
समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ३७
तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन्
अस्त्रज्ञानं क्रियाज्ञानं शौनकात्परमेष्यति ॥३८॥
सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ।
असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ३९।
गजाह्वये हृते नद्या कौशांब्यां साधु वत्स्यति ।
उक्तस्ततश्चित्ररथस्तस्मात्कविरथः सुतः ॥ ४० ।
तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ।
सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ॥४१
परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ।
नृपञ्जयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति ॥४२
तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ।
शतानीकादुर्दमनस्तस्यापत्यं वहीनरः ॥ ४३
दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ।
ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ४४
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ
[पापानि कीर्तनादेषां विलयं यान्ति कृत्स्नशः ।
अथ मागधराजानो भवितारो वदामि ते ॥४५
भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ।
ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ४६
सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोऽथ कर्मजित् ।
ततः सुतञ्जयाद्विप्रः शुचिस्तस्य भविष्यति ४७
क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः शमस्ततः ।
द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ४८
सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुञ्जयः ।
बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ४९

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

१ विज० श्रुतकीर्तिस्तथा । २ वीर० ष्ठिरात्पौरवत्यां । ३ विज० काली शर्वगतं ततः । ४ वीर० मणलूरुपतेः । ५ वीर० ज्ञात्वा । ६ विज० मेधया ।

१ वीर० परं ज्ञानं । २ विज० विसंभकृष्णः । ३ वीर स्तस्यासीन्निश्चक्रुस्तत्सुतः स्मृतः । ४ उभ० स्तस्माच्छुचिरथः ५ विज० धृष्टिमांस्तस्य । ६ उभ० पारिप्लवः । ७ वीर० दूर्वोनिमि । ८ विज० जनिष्यते । ९ वीर० तिमे । विज० ततो बृह । १० वीर० विहीनरः । विज० प्रहीतरः ११ वीर० निधि । १२ उभ० वै योनिर्वंशो । १३ विज० इदमर्धमधिकं दृश्यते । १४ वीर० मार्जालेयः श्रुत । विज० सोमापिर्यच्छ्रुत । १५ उभ० श्रुतञ्जयो विप्रः । १६ वीर० द्धर्मनेत्रः श्रुतस्ततः । विज० द्धर्मसत्रः श्रमस्ततः । १७ उभ० दृढसेनो । १८ वीर० विश्वजिच्च पुरञ्जयः । १९ वीर० एवं भूपा । २० विज० एकोनविंशोऽध्यायः ।

# त्रयोविंशोऽध्यायः ॥ २३ ॥

ययातिपुत्राणां अनुद्रुह्युतुर्वसूनां वंशकथनं ॥ १ ॥ पुनर्यदुवंशमनुक्रम्य ज्यामघपर्यन्तं वर्णनं ॥ २ ॥

**श्रीशुक उवाच—**

अनोः सभानरश्चक्षुः परोऽक्षश्च त्रयः सुताः ।
सभानरात्कालनरः सृञ्जयस्तत्सुतस्ततः ॥ १ ॥
जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ।
उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥
शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ।
वृषादर्भः सुवीरश्च मद्रः कैकेय आत्मजाः ॥३॥
शिबेश्चत्वार एवासंस्तितिक्षोश्च रुशद्रथः ।
ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥४॥
अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रान्ध्रसंज्ञिताः ।
जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥
चक्रुः स्वनाम्ना विषयान्षडिमान्प्राच्यकांश्च ते ।
खनपानोऽङ्गतो जज्ञे तस्माद्दिविरथस्ततः ॥ ६ ॥
सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ।
रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥७॥
शान्तां स्वकन्यां प्रायच्छदृष्यशृङ्ग उवाह ताम् ।
देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥८॥
नाट्यसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः ।
स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ॥९॥
प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः ।
चतुरङ्गो रोमपादात्पृथुलाक्षस्तु तत्सुतः ॥१०॥
बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुतः ।
आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥ ११ ॥
विजयस्तस्य संभूत्यां ततो धृतिरजायत ।
धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः ॥ १२ ॥

१ विज० परेक्षुश्च । २ वीर० कालनाभः । ३ विज० सञ्जय । ४ वीर० महाशालो । ५ विज० वेनः क्रमिर्दक्षः । वीर० वेनः क्रमिर्दर्पः । ६ वीर० वृषदर्भः । ७ वीर० वृषद्रथः । विज० पृषद्रथः । ८ विज० प्राच्यकानिह । ९ वीर० तस्माद्धवि । १० वीर० रतो । ११ विज० मित्ररथोऽप्रजः । १२ विज० वाद्य । १३ उभ० ततो । १४ वीर० धृतिस्तस्य धृतव्रतः । १५ वीर० सत्यकर्माऽभवत्तस्य चित्रश्चाति ।

योऽसौ गङ्गातटे क्रीडन्मञ्जूषान्तर्गतं शिशुम् ।
कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत्सुतम् १३
वृषसेनः सुतस्तस्य कर्णस्य जगतीपते ।
द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्याऽऽत्मजस्ततः १४॥
आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः ।
धृतस्य दुर्मनास्तस्मात्प्रचेताः प्राचेतसं शतम्॥१५॥
म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ।
तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ॥१६॥
त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ।
मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ १७ ॥
दुष्यन्तः स पुनर्भेजे स्वं वंशं राज्यकामुकः ।
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ॥ १८ ॥
वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ।
यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १९ ॥
यत्रावतीर्णो भगवान्परमात्मा नराकृतिः ।
यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः २०
चत्वारः सूनवस्तत्र शतजित्प्रथमात्मजः ।
महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥ २१ ॥
धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ।
सोऽहञ्जिरभवत्कुन्तेर्महिष्मान्भद्रसेनकः ॥ २२ ॥
दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ।
कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः २३
अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ।
दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः ॥ २४ ॥
न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २५ ॥
पञ्चाशीतिसहस्राणि ह्यव्याहतबलः समाः ।

१ वीर० दुर्मद । विज० कर्दम । २ वीर० स्तत्सुताः शतं । ३ वीर० सुभानुः । विज० नृभानु । ४ वीर० मरुत्तस्तत्सुतो । ५ उभ० दुष्यन्तं । ६ विज० स्वयं साम्राज्य । ७ वीर० क्रोष्टुः ।

[अकरोदर्जुनो राज्यं हरिं चैवान्वहं स्मरन् ।]
अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २६ ॥
तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे ।
जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २७ ॥
जयध्वजात्तालजङ्घस्तस्य पुत्रशतं त्वभूत् ।
क्षत्रं यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम् ॥ २८ ॥
तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः।
तस्य पुत्रशतं त्वासीद्वृष्णिज्येष्ठं यतः कुलम्॥२९॥
माधवा वृष्णयो राजन्यादवाश्चेति संज्ञिताः ।
यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥३०॥
श्वाहिस्ततो तस्य चित्ररथस्ततः ।
शशबिन्दुर्महायोगी महाभोजो महानभूत् ॥३१॥
चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ।
तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥३२॥
दश लक्षसहस्राणि पुत्राणां तास्वजीजनत् ।
तेषां तु षट् प्रधानानां पृथुश्रवस आत्मजः॥३३॥
धर्मो नामोशना तस्य हयमेधशतस्य याट् ।
तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु॥३४॥
पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ।
ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात्॥
नाविन्दच्छत्रुभवनाद्भोज्यां कन्यामहारषीत् ।
रथस्थां तां निरीक्ष्याऽऽह शैब्या पतिममर्षिता३६
केयं कुहक मत्स्थानं रथमारोपितेति वै ।
स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत्॥३७॥
अहं वन्ध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ।
जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥ ३८ ॥
अन्वमोदन्त तद्विश्वेदेवाः पितर एव च ।
शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् ।
स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम्॥३९॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

विदर्भवंशं चेदिवंशं चोक्त्वा सङ्ग्रहेण श्रीकृष्णरामाद्युत्पत्तिकथनं ॥ १ ॥

**श्रीशुक उवाच—**

तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ ।
तृतीयं रोमपादं च विदर्भकुलनन्दनम् ॥ १ ॥
रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ।
उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृपं ॥ २ ॥
क्रथस्य कुन्तिः पुत्रोऽभूद्धृष्टिस्तस्याथ निर्वृतिः ।
ततो दशार्हो नाम्नाऽभूत्तस्य व्योमः सुतस्ततः॥३॥
जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ।
ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥
करंभिः शकुनेः पुत्रो देवरातस्तदात्मजः ।
देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥
पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ।
भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोन्धकः॥६॥
सात्वतस्य सुताः सप्त महाभोजश्च मारिष ।
भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव च॥७॥

---

१ उभ० इदमर्धमधिकं । २ विज० विष्णु । ३ वीर० सहस्रस्य । विज० सहस्राणां । ४ वीर० श्वाहितोतो रुशङ्कुर्वै । विज० वाहिस्ततो रुशेकुर्वै । ५ वीर० शशिबिन्दु । ६ वीर० सहस्राणि दशासन्सु । ७ वीर० वैदर्भकूल । विज० वैदर्भ कुल । ८ वीर० कुशिकः । ९ वीर० नृपाः । विज० यतः । १० वीर० द्युष्णिस्तस्याय । विज० द्युलिस्तस्याय । ११ विज० दशार्हनामाऽथ तस्य ।

१ विज० शतस्वराट् । २ विज० कन्यां भ्रष्टा । ३ वीर० कथ । ४ उभ० मुपपत्स्यते । ५ विज० विंशोऽध्यायः । ६ वीर० तीव्ररथः । ७ वीर० करंभः । ८ वीर० कुकुरकस्ततः । विज० कुकूरकस्ततः । ९ वीर० पुरुहोत्रोऽभवत्पुत्रस्तस्याभू । १० विज० सलत । ११ वीर० दीप्तो । १२ वीर० कङ्कणो वृष्णि । विज० किङ्कणो धृष्टि ।

एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ।
शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥ ८ ॥
बभ्रुर्देवावृध[1]सुतस्तयोः श्लोकौ पठन्त्यमू[2] ।
यथैव शृणुमो दूरात्संपश्यामस्तथान्तिकात् ॥९॥
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः[3] समः ।
पुरुषाः पञ्चषष्टिश्च षट् सहस्राणि चाष्ट च॥१०॥
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ।
महाभोजोऽपि धर्मात्मा[4] भोजा आसंस्तदन्वये ११
वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप ।
शिनिस्तस्यानमित्रश्च निघ्नोऽभूदनमित्रतः ॥१२॥
सत्राजितः प्रसेनश्च निघ्नस्याप्या[5]सतुः सुतौ ।
अनमित्रसुतो योऽन्यः[6] शिनिस्तस्या[7]थ सत्यकः॥१३
युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ।
युगन्धरोऽनमित्रस्य वृष्णिः[8] पुत्रोऽपरस्ततः १४॥
श्वफल्कश्चित्ररथश्च[9] गान्दिन्यां च श्वफल्कतः ।
अक्रूरप्रमुखा आसन्पुत्रा द्वादश विश्रुताः॥१५॥
आसङ्गः[10] सारमेयश्च मृदुरो[11] मृदुविद्गिरिः ।
धर्मवृद्धः[12] सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १६ ॥
शत्रुघ्नो गन्धमादश्च[13] प्रतिबाहुश्च द्वादश ।
तेषां स्वसा सुचीराख्या[14] द्वावक्रूरसुतावपि ॥१७॥
देववानुपदेवश्च तथा चित्ररथात्मजाः ।
पृथुर्विदूरथाद्याश्च[15] बहवो वृष्णिनन्दनाः ॥ १८ ॥
कुकुरो भजमानश्च शुचिः कंबलबर्हिषः।
कुकुरस्य सुतो वह्नि[16]र्विलोमा तनयस्ततः ॥ १९ ॥
कपोतरोमा तस्यानुः[17] सखा यस्य च तुंबुरुः ।
अन्धको[18] दुन्दुभिस्तस्य दरिद्योतः[19] पुनर्वसुः ॥२०

तस्याहुकश्चाहुकी च कन्या[1] चैवाहुकात्मजौ ।
देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥
देववानुपदेवश्च सुदेवो देववर्धनः ।
तेषां स्वसारः सप्ताऽऽसन्धृतदेवादयो[2] नृप ॥२२॥
शान्तिदेवोपदेवा[3] च श्रीदेवा देवरक्षिता ।
सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥
कंसः सुनामा न्यग्रोधः कङ्कः[4] शङ्कुः सुहूः[5]स्तथा ।
राष्ट्रपालोऽथ[6] सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥
कंसा कंसावती कङ्का शूरभू[7]राष्ट्रपालिका ।
उग्रसेनदुहितरो[8] वसुदेवानुजस्त्रियः ॥ २५ ॥
शूरो विदूरथादासीद्भजमानः[9] सुतस्ततः ।
शिनिस्तस्मात्स्वयंभोजो हृदीकस्तत्सुतो मतः २६॥
देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ।
देवमीढस्य शूरस्य मारिषानाम पत्न्यभूत् ॥२७॥
तस्यां स जनयामास दश पुत्रानकल्मषान् ।
वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥
सृञ्जयं श्यामकं कङ्कं शमीकं[10] वत्सकं वृकम् ।
देवदुंदुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥
वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ।
पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः॥३०॥
राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः ।
कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात्[11] ३१
साऽऽप दुर्वाससो विद्यां देवहूतीं प्रतोषितात् ।
तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिम्[12] ३२ ॥
तदैवोपागतं[13] देवं वीक्ष्य विस्मितमानसा ।
प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व[14] मे ३३ ॥
अमोघं[15] दर्शनं देवि आधत्से[16] त्वयि चाऽऽत्मजम् ।

---

१ देवापृथ । २ विज० श्लोकं पठन्त्यमुं । ३ वीर० पृथः । ४ उभ० भोजोतिधर्मा । ५ वीर० स्याथासत्नुः । ६ वीर० ह्यन्यः । ७ उभ० शितिस्तस्य च । ८ उभ० पृष्णिः । ९ वीर० श्वफल्कश्चित्रकश्चैव । १० वीर० असङ्गः । ११ वीर० मृदुको मृदुपच्छिवः । १२ वीर० वर्मदृग्धृष्टवर्मश्च क्षत्रोपेक्षोरिमन्दरः । विज० धर्मो विधृष्टकर्मा च । १३ वीर० गन्धमादाह्वः । विज० गन्धमादोह्वः । १४ वीर० सुवीराख्या । विज० सुचाराख्या । १५ वीर० पृथुर्विड्डूरथाद्याश्च । विज० पृथुर्विपृथुधाताद्याः । १६ वीर० वृष्णेः । विज० वृष्णिः । १७ वीर० तस्याभूत् । १८ वीर० अन्धाका । विज० अनोश्च । १९ विज० दरिद्योतः ।

१ उभ० कन्या द्वाबाहु । २ विज० शान्तिदेवादयो । ३ विज० शान्तिदेवोप । ४ वीर० कह्वः । विज० कंह्वः । ५ उभ० सुभूः । ६ वीर० विसृष्टश्च । विज० ऽब्दसृष्टिश्च । ७ विज० सुरभू । ८ उभ० औग्रसेना दुहि । ९ वीर० ध्वजमानः । विज० भजमानसुतात्ततः । १० वीर० कङ्कमनिकं । विज० कङ्कमनीकं । ११ वीर० सुता । १२ वीर० भुवि । १३ वीर० तदा प्राहागतं । १४ वीर० उभ० क्षमस्व भोः । १५ उभ० अमोघं देवसंदर्शं । १६ वीर० आधित्से । विज० आधास्ये ।

योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे॥३४।
इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ।
सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः॥३५।
तं साऽत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ।
प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥३६।
श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ।
यस्यामभूद्दन्तवक्त्र ऋषिशप्तो दितेः सुतः ॥३७।
कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ।
सन्तर्दनादयस्तस्यां पञ्चाऽऽसन्कैकयाः सुताः॥३८।
राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्टह ।
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥
शिशुपालः सुतस्तस्याः कथितस्तस्य संभवः ।
देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥
कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ।
कङ्कायामानकाज्जातः सत्यजित्पुरुजित्तथा ॥४१ ।
सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ।
हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ॥४२ ।
मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा ।
तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे ॥४३ ।
सुमित्रार्जुनपालादीञ्छमीकात्तु सुदामिनी ।
कङ्कश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥
पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकीप्रमुखा आसन्पत्न्य आनकदुन्दुभेः ॥४५ ॥
बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥४ ॥
सुभद्रो भद्रवाहश्च दुर्मदो भद्र एव च ।
पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन्॥४ ॥
नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ।
[illegible] ॥ ॥

रोचनायामतो जाता हस्तहेमाङ्गदादयः ।
इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ॥४९॥
विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः ।
शान्तिदेवात्मजा राजञ्श्रमप्रतिश्रुतादयः ॥५०॥
राजानः कल्पवर्षाद्या उपदेवासुता दश ।
वसुहंससुवंशाद्याः श्रीदेवायास्तु षट् सुताः॥५१।
देवरक्षितया लब्धा नव चात्र गदादयः ।
वसुदेवः सुतानष्टावादधे सहदेवया ॥ ५२ ॥
पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ।
वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ ५३ ।
कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ।
ऋजुं संमर्दनं भद्रं सङ्कर्षणमहीश्वरम् ॥ ५४ ॥
अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल ।
सुभद्रा च महाभागा तव राजन्पितामही ॥५५।
यदा यदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ।
तदा तु भगवानीश आत्मानं सृजते हरिः॥५६।
न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ।
आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥५७।
यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ।
अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥
अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ।
भुव आक्रम्यमाणाया अभाराय कृतोद्यमः॥५९
कर्माण्यपरिमेयाणि मनसाऽपि सुरेश्वरैः ।
सहसंकर्षणश्चक्रे भगवान्मधुसूदनः ॥ ६० ॥
कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ।
अनुग्रहाय भक्तानां स पुण्यं व्यतनोद्यशः॥६१
यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ।
श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥६२
भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ।

---

१ विज० समाधाय । २ वीर० पाण्डुस्ते । ३ र०
द्धशर्मा । ४ विज० इति शब्दोदितेः । ५ वीर० मावन ।
वीर० बकः कङ्कात्तु शङ्कायां । ७ विज० कामु ः ।
विज० मित्रकेश्या । ९ वीर० सुमित्रानीक । १० मं०
णादी । ११ विज० ननीकात्तु । १२ वीर० आन ः ।
ज० गाण्डूषः । १३ वीर० कृपादीनु । विज० कृत ह ।
४ उभ० भद्रबाहश्च । १५ विज० भद्राख्या ।

१ विज० इलायां पुरु । २ उभ० त्रिपृष्ठो । ३
न्श्रमप्रश्रितादयः । ४ विज० उपदेव्याः । ५
सुधन्वाद्या । ६ वीर० पौरवश्रुतमुख्यांश्च । विज० पुरु
मृदुमुखान्साक्षा । ७ वीर० समदनं । ८ विज० यदा
हि । ९ विज० कर्मणां वा । १० विज० आक्रमम
[illegible] । ११ विज० भक्तानां ।

श्लाघनीयेहितः शश्वत्कुरुसृञ्जयपाण्डुभिः ॥६३॥
स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ।
नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥६४॥
यस्याऽऽननं मकरकुण्डलचारुकर्ण-
भ्राजत्कपोलसुभगं सविलासहासम् ।
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो
नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥
जातो गतः पितृगृहाद्व्रजमेधितार्थो
हत्वा रिपून्सुतशतानि कृतोरुदारः ।
उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे
आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥
पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणा-
मन्तः समुत्थकलिना युधि भूपचम्वः ।
दृष्ट्या विधूय विजये जयमुद्विघोष्य
प्रोच्योद्धवाय च परं समगात्स्वधाम ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामष्टादशसाहस्र्यां

नवमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तश्चायं नवमः स्कन्धः ॥ ९ ॥



१ वीर० स्मि । २ वीर० विभ्रम । ३ विज० ...धितोऽत्र ।

१ वीर० भूम्याः स वा उरु । २ वीर० भूपचक्रं । विज० भूपबन्धं । ३ वीर० ऽभिभूय । ४ उभ० मुद्रि- घुष्य । ५ विज० वरं । ६ विज० एकविंशोऽध्यायः ।

॥ दशमस्कंधः ॥

೧ ಅಧ್ಯಾಯ.

(4) ಶ್ಲೋಕ

ಆತ ರಮಾಕಾಂತನ ಗುಣಾಮೃತವನ್ನು ಎಷ್ಟೆಷ್ಟು ಶ್ರವಣ ಮಾಡಿದರೂ ತೀರಿ
ತೀರಿ ಆಸೆಯನ್ನೇ ಹೆಚ್ಚಿಸುವದೇ ಹೊರ್ತು ತೃಪ್ತಿಯುಂಟಾಗುವದಿಲ್ಲ.
ಸ್ವರ್ಗ ಲೋಕದಲ್ಲಿ ದೇವತೆಗಳಿಗೆ ಲಭಿಸುವ ಅಮೃತಕ್ಕಿಂತಲೂ ಈ ಭಗ
ವನ್ನಾಮಾಮೃತವೇ ಬಹು ಬಹು ಅತಿಶಯವಾದದ್ದು. ಇದರ ರುಚಿಯೇ
ಬೇರೆ. ಇದರ ಗುಣಗಳೇ ಬೇರೆ. ಹೀಗಂದರೆ ಆ ಅಮೃತವು ವಿಷಯಾಸಕ್ತರಾದ
ಭೋಗಿಗಳಿಗೆ ಪ್ರಿಯವಾದದ್ದು ಇದು ವಿಷಯ ವಿಮುಖರಾದ ಯೋಗಿಗ
ಳಿಗೆ ಪ್ರಿಯವಾದದ್ದು ಅದು ಸಂಸಾರವೆಂಬ ವ್ಯಾಧಿಯನ್ನು ಹೆಚ್ಚಿಸುವದು
ಈ ಅಮೃತವು ಅದನ್ನು ನೀಗಿಸುವದು. ಅದು ನಾಲಗೆಗೆ ಮಾತ್ರ ರುಚಿ
ಕರವಾಗಿರುವದು ಇದಾದರೋ ನಾಲಗೆಗೆ ಮಾತ್ರವಲ್ಲದೆ ಕಿವಿಗಳಿ
ಗೂ ಮನಸ್ಸಿಗೂ ಆಹ್ಲಾದಕರವಾಗಿರುವದು ಇಂಥ ಲಕ್ಷ್ಮೀನಾಥನ ಗು
ಣಾವಳಿ ಭಗವನ್ನಾಮಾಮೃತವನ್ನು ಶ್ರವಣಮಾಡುವ ವಿಷಯದಲ್ಲಿ
ವಿವೇಕಬುದ್ಧಿಯುಳ್ಳ ಯಾವನಿಗೆ ತಾನೆ ಬೇಸರವುಂಟಾಗುವದು? ಪಶು
ಘಾತಿಯಾದ ಕ್ರೂರ ಸಂಧ್ಯ ವಧೆಯೋ ಬೇಟೆಯವರೋ ಆ ಭಗವದ್ಗು
ಣಾನುವಾದದಲ್ಲಿ ಬೇಸರಹೊಂದಲಾರರು. ಅದರಲ್ಲಿಯೂ ಮುಖ್ಯ
ವಾಗಿ [illegible] ಶ್ರೀಕೃಷ್ಣನ ಚಾರಿತ್ರೆಗಳನ್ನು ಎಷ್ಟು ಕೇಳಿದರೆ ತಾನೆ ತೃಪ್ತಿಯುಂಟಾ
ಗುವದು?

5) ಹಿಂದೆ ಅನೇಕ ಕೋಟಿ ದಾನವರು ಭೂಮಿಯಲ್ಲಿ ಕ್ಷತ್ರಿಯರಾಗಿ
ದುಷ್ಟ ರಾಜರೂಪದಿಂದ ಲೋಕಕಂಟಕರಾಗಿರುತ್ತಿದ್ದರು.

॥ श्रीः ॥

श्रीगोपालकृष्णाय नमः ।

# श्रीमद्भागवतम् ।

## दशमस्कन्धः पूर्वार्धम् १०

### प्रथमोऽध्यायः ॥ १ ॥

श्रीकृष्णचरित्रकथनारंभः ॥ १ ॥ देवकीवसुदेवविवाहः ॥ २ ॥ देवकीहननोद्युक्तस्य कंसस्य वसुदेवेन सामपूर्वकं निवर्तनम् ॥ ३ ॥ कंसेन देवकीवसुदेवयोर्निगडबन्धनं ॥ ४ ॥ तेन तयोः पुत्रषट्कस्य हननम् ॥ ५ ॥

॥ ॐ नमोभगवते वासुदेवाय ॥

राजोवाच

कथितो वंशविस्तारो भवता सोमसूर्ययोः ।
राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥
यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ।
तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥२॥
अवतीर्य यदोर्वंशे भगवान्भूतभावनः ।
कृतवान्यानि विश्वात्मा तानि नो वद विस्तरात् ॥३॥
निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादा-
त्पुमान्विरज्येत विना पशुघ्नात्[1] ॥ ४ ॥
पितामहा मे समरेऽमरञ्जयै-
र्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं
कृत्वाऽतरन्वत्सपदं स यत्प्लवाः ॥ ५ ॥
द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं
सन्तानबीजं कुरुपाण्डवानाम् ।
जुगोप कुक्षिं गत आत्तचक्रो
मातुश्च मे यः शरणं गतायाः ॥ ६ ॥
वीर्याणि तस्याखिलदेहभाजा-
मन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमुतामृतं च[1] मनामयं च ।
मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥
रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया ।
देवक्या गर्भसंबन्धः कुतो देहान्तरं विना ॥८॥
कस्मान्मुकुन्दो भगवान्पितुर्[2]गेहाद्व्रजं गतः ।
क्व वासं ज्ञातिभिः सार्धं कृतवान्सात्वतां पतिः ॥९॥
व्रजे वसन्किमकरोन्मधुपुर्यां च केशवः ।
भ्रातरं चावधीत्कंसं मातुरद्धाऽतदर्हणम् ॥१०॥
देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ।
यदुपुर्यां सहावात्सीत्पत्न्यः कत्यभवन्प्रभो[3] ॥११॥
एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ।
वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥१२॥
नैषाऽतिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ।

---

[1] विज० तिमुग्धात्

[1] विज० मृत्युमनामयं च । ~~२ वीर० पितृगेहा~~

[3] विज० न्विभोः । ~~वीर० विभो~~ ।

पिबन्तं त्वन्मुखांभोजच्युतं हरिकथामृतम् ॥१३॥
सूत उवाच—
एवं निशम्य भृगुनन्दनसाधुवादं
वैयासकिः स भगवानथ विष्णुरातम् ।
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं
व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥
श्रीशुक उवाच—
सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम ।
वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥१५॥
वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ।
वक्तारं पृच्छकं श्रोतृंस्तत्पादसलिलं यथा ॥१६॥
भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ १७॥
गौर्भूत्वाऽश्रुमुखी खिन्ना क्रन्दन्ती करुणं
उपस्थितान्तिके तस्मै व्यसनं स्वमवोचत ॥१८॥
ब्रह्मा तदुपधार्याथ सह देवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥
गिरं समाधौ गगने समीरितां
निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे शृणुतामराः पुन-
र्विधीयतामाशु तथैव माचिरम् ॥ २१ ॥
पुरैव पुंसाऽवधृतो धराज्वरो
भवद्भिरंशैर्यदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः
स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥ २२ ॥
वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः ।
जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः ॥२३॥
[ ऋषयोऽपि तदादेशात्कल्प्यन्तां पशुरूपिणः ।
पयोदानमुखेनापि विष्णुं तर्पयितुं सुराः ॥१॥]
वासुदेवकलाऽनन्तः सहस्रवदनः स्वराट् ।
अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥२४॥
विष्णोर्माया भगवती यया संमोहितं जगत्
प्रभुणांशेन कार्यार्थे संभविष्यति ॥२५॥
श्रीशुक उवाच—
इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ।
आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥२६॥
शूरसेनो यदुपतिर्मथुरामावसन्पुरीम् ।
माथुरान् शूरसेनांश्च विषयान्बुभुजे पुरा ॥ २७ ॥
राजधानी ततः साऽभूत्सर्वयादवभूभुजाम् ।
मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः ॥२८॥
तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ।
देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥२९॥
उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ।
रश्मीन्हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ ३० ॥
चतुःशतं पारिबर्हं गजानां हेममालिनाम् ।
अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥३१॥
दासीनां सुकुमारीणां द्वे शते समलङ्कृते ।
दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः ॥ ३२ ॥
शङ्खतूर्यमृदङ्गाश्च नेदुर्दुन्दुभयः समम् ।
प्रयाणप्रक्रमे तावद्वरवध्वोः सुमङ्गलम् ॥ ३३ ॥
पथि प्रग्रहिणं कंसमाभाष्याऽऽहाशरीरवाक् ।
अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध ॥३४॥
इत्युक्तः स खलः पापो भोजानां कुलपांसनः
भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ३५
तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ।
वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥३६॥
वसुदेव उवाच—
श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः ।
स कथं भगिनीं हन्यात्स्त्रियमुद्वाहपर्वणि ॥३७॥

१ वीर० भोजाच्युतं । विज० भोजसुतं । २ वीर० मतिः । ३ उभ० रुदन्ती । ४ विज० यथा । ५ वीर० सुवाच । ६ वीर० तत्प्रूजार्थं संभवन्त्वमरस्त्रियः । ७ वीर० अयमेकः श्लोकः अधिकः ।

१ वीर० अग्रजो । २ सोममाया । ३ वीर० माथसत्पुरीं । ४ विज० स्वराट् । ५ विज० मायया । ६ वीर० कंसो भगिन्याः । ७ उभ० जगृहे । ८ वीर० आनैर्दुहितृ । ९ उभ० मृदङ्गानि । १० वीर० प्रयाणोपक्रमे । ११ उभ० तात । १२ उभ० नयसे । १३ वीर० कर्मणि ।

यदाह वः समागत्य कृष्णः सत्यं करोति तत् ३५
मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके ।
अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३६ ॥
न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्य मानिनः ।
नोत्तमो नाधमो वाऽपि समानस्यासमोऽपि वा ॥
न माता न पिता तस्य न भार्या न सुतादयः ।
नात्मीयो न परश्चापि न देहो जन्म एव च ३८
न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ।
क्रीडार्थः सोपि साधूनां परित्राणाय कल्पते ३९
सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ।
क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः ४०
यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ।
चित्ते कर्तरि तत्राऽऽत्मा कर्तेवाहंधिया स्मृतः ४१
युवयोरेव नैवायमात्मजो भगवान्हरिः ।
सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ४२
दृष्टं श्रुतं भूतभवद्भविष्य-
त्स्थास्नुश्चरिष्णुर्महदल्पकं च ।
विनाऽच्युताद्वस्तु तरां न वाच्यं
स एव सर्वं परमार्थभूतः ॥ ४३ ॥

एवं निशा सा ब्रुवतोर्व्यतीता
नन्दस्य कृष्णानुचरस्य राजन् ।
गोप्यः समुत्थाय निरूप्य दीपा-
न्वास्तून्समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥
ता दीपदीप्तैर्मणिभिर्विरेजू
रज्जूर्विकर्षद्भुजकङ्कणस्रजः ।
चलन्नितंबस्तनहारकुण्डल-
त्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४५ ॥
उद्गायतीनामरविन्दलोचनं
व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः ।
दध्नश्च निर्मन्थनशब्दमिश्रितो
निरस्यते येन दिशाममङ्गलम् ॥ ४६ ॥
भगवत्युदिते सूर्ये नन्दद्वारि व्रजौकसः ।
दृष्ट्वा रथं शातकौंभं कस्यायमिति चाब्रुवन् ॥ ४७ ॥
अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ।
येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥
किं साधयिष्यत्यस्माभिर्भर्तुः प्रीतस्य निष्कृतिम् ।
इति स्त्रीणां वदन्तीनामुद्धवोऽगात्कृताह्निकः ॥ ४९

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

श्रीकृष्णाज्ञया गोपीनां तत्वज्ञानमुपदिश्य मधुरागमनं ॥ १ ॥

श्रीशुक उवाच—
तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः
प्रलंबबाहुं नवकञ्जलोचनम् ।
पीतांबरं पुष्करमालिनं लस-
न्मुखारविन्दं मणिमृष्टकुण्डलम् ॥ १ ॥
शुचिस्मिताः कोऽयमपीच्यदर्शनः
कुतश्च कस्याच्युतवेषभूषणः ।
इति स्म सर्वाः परिवव्रुरुत्सुका-
स्तमुत्तमश्लोकपदांबुजाश्रयम् ॥ २ ॥

१ विज० माखिद्येतां । २ विज० नह्यस्यातिप्रियः । ३ विज० न परश्चास्य । ४ वीर० कर्म चैव वा । विज० जन्म कर्म वा । ५ वीर० नचास्य जन्म वा । विज० लोकस्य जन्मकर्माणि । ६ उभ० क्रीडार्थं । ७ विज० महान् । ८ वीर० न्नतीतोपि गुणैः । विज० न्ननीहोनुगुणैः । ९ विज० अयं श्लोको नास्ति । १० विज० स्थास्नु चरिष्णु मह । ११ वीर० द्वस्त्वितरन्न । विज० वस्तुतया । १२ विज० रूपः ।

१ विज० रज्वा विकर्षत्करकङ्कणाः स्त्रियः । २ उभ० व्रजद्वारि । ३ उभ० प्रेतस्य । ४ विज० चतुश्चत्वारिंशोऽध्यायः । ५ उभ० परिमृष्ट । ६ विज० सुविस्मिताः कोयमतीव दर्शनः ।

ा प्रश्रयणावनताः सुसत्कृत
ाव्रीडहासेक्षणसूनृतादिभिः ।
ाष्टमासने
वेज्ञाय सन्देशहरं रमापतेः ॥ ३ ॥
ानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ।
र्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥४॥
ान्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ।
ेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥
ान्येष्वर्थकृता मैत्री यावदर्थविडंबनम् ।
ुंभिः स्त्रीषु कृता यद्वत्सुमनस्स्विव षट्पदैः॥६॥
नेःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ।
ाधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥७॥
ागा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ।
ाग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियं ॥
ति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ।
कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥९॥
ायन्त्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ।
ास्य संस्मृत्यसंस्मृत्य यानि कैशोरबाल्ययोः १०
ाचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ।
प्रेयप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥
ोप्युवाच—
ाधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः
ाचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ।
ाहतु मधुपतिस्तन्मानिनीनां प्रसादं
ादुसदसि विडंब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥
ाकृदधरसुधां स्वां मोहिनीं पाययित्वा
ाुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक् ।
रिचरति कथं तत्पादपद्मं तु पद्मा
ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥
किमिह बहु षडङ्घ्रे गायसि त्वं यदूना-
मधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गीयतां तत्प्रसङ्गः
क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥
दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
कपटरुचिरहासभ्रूविजृंभस्य याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का
अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥
विसृज शिरसि पादं वेद्म्यहं चाटुकारै-
रनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन् ॥ १६॥
मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा
स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥
यदनुचरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ।
सपदि गृहकुटुंबं दीनमुत्सृज्य दीना
बहव इह विहङ्गा भिक्षुचर्यां चरन्ति ॥ १८ ॥
वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः
कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्र-
स्मररुज उपमन्त्रिन्भण्यतामन्यवार्ता ॥ १९ ॥
प्रियसख पुनरागाः प्रेयसा प्रेषितः किं
वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान्दुस्त्यजद्वन्द्वपार्श्वं

१ विज० परिविष्ट। २ विज० पार्षदार्यमनुव्रतं । उभ० विडंबना। ४ वीर० गृहान्। ५ विज० परस्त्रियं। विज० ददर्श गोपीर्गोविन्दमनोवाग्देहचेष्टितैः। ७ विज० ष्णदूतो व्रजं प्राप्त उद्धवस्त्यक्तलौ। ८ विज० मा स्पृशा- ान्सपत्न्याः। ९ विज० श्मश्रुभिस्त्वं। १० वीर० यदु- ति। ११ विज० सद्यः कस्त्यजेन्मां। १२ विज० तत्पद्म- ञ्जलकृपादं अपि बत हृतचित्ता।

१ विज० गायतां। २ वीर० का ह्यपि च। ३ विज० रलमनुनयसारैर्याहि दौत्ये मुकुन्दं। ४ विज० पत्यपत्यास- लोका। ५ विज० मस्य। ६ विज० यः किरातः। ७ विज० बिलवासं वेदविद्वर्गवन्द्यस्तदल। ८ विज० भैक्ष। ९ वीर० मिति। १० विज० जिह्मव्याहृतं। ११ उभ० ददृशिम। १२ विज० स्तनरुजपरमार्तिं भण्यतामस्य वार्ता। १३ विज० प्रेषितस्त्वं। १४ विज० दुस्त्यजं बन्धुपार्श्वं।

सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥ २० ॥
अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते
स्मरति स पितृगेहान्सौम्य बन्धूंश्च गोपान् ।
कच्चिदपि स कथा नः किङ्करीणां गृणीते
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत्कदानु ॥ २१ ॥

श्रीशुक उवाच—

अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ।
सान्त्वयन्प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥

उद्धव उवाच—

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मनः ॥ २३ ॥
दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यः कृष्णे भक्तिर्हि साध्यते २४
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा २५
दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च
हित्वाऽवृणीत यूयं यत्कृष्णाख्यं पुरुषं परम् २६
सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ।
विरहेण महाभागा महान्मेऽनुग्रहः कृतः ॥ २७ ॥
श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ।
यमादायागतो भद्रा अहं भर्तू रहस्करः ॥ २८ ॥

श्रीभगवानुवाच—

भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ।
यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ।
तथाऽहं च मनः प्राणभूतेन्द्रियगुणाश्रयः ॥ २९ ॥
आत्मन्येवाऽऽत्मनाऽऽत्मानं सृजे हन्म्यनुपालये ।
आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ ३० ॥
आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ।
सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३१ ॥

१ विज० गेहं । २ वीर० स कथां नः । विज० स कथं नः । ३ विज० गृहीतो । ४ विज० मित्यर्पिता मतिः । ५ उभ० श्रेयोविधिभिरन्यैश्च । ६ वीर० साध्वी । ७ विज० धिगतो । ८ विज० महान्वो । ९ विज० भर्तुर्हि किङ्करः । १० वीर० तथा ह्यहं । ११ उभ० बुद्धीन्द्रिय ।

येनेन्द्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ।
तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ३२
एतदन्तः समाम्नायो योगः साङ्ख्यं मनीषिणाम् ।
त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः ३३
यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ।
मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥
यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ।
स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ३५
मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ।
अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ ॥ ३६ ॥
या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः
अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिन्तया ॥

श्रीशुक उवाच—

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ।
ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः ॥ ३८ ॥

गोप्य ऊचुः

दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ।
दिष्ट्याऽऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥
कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ।
प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥
कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ।
नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥
अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् ।
गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ४२ ॥
ताः किं निशाः स्मरति यासु तदा प्रियाभि-
र्बृन्दावने कुमुदकुन्दशशाङ्करम्ये ।
रेमे क्वणच्चरणनूपुररासगोष्ठ्या-
मस्माभिरीडितमनोज्ञकथाः कदाचित् ॥ ४३ ॥

१ विज० अयं श्लोको नास्ति । २ वीर० ध्यायीत । ३ वीर० दूरे वर्तें प्रिया दृशां । विज० दूरवतप्रिया दृशां । ४ विज० दूरतरे । ५ विज० यन्मया क्रीडिता रात्रीः । ६ विज० अलब्धवासकल्याणा आपुर्मा मद्विचिन्तया । ७ विज० देश । ८ वीर० तमूचु । ९ विज० सुस्निग्ध । १० उभ० पुर । ११ वीर० भावितः । १२ उभ० ग्राम्यस्वैर ।

अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ।
सञ्जीवयन्नु नो गात्रैर्यथेन्द्रो वनमंबुदैः ॥ ४४ ॥
कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः ।
नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥
किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ।
श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥४६॥
परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला ।
तज्जानतीनां नः कृष्णे तथाऽप्याशा दुरत्यया४७
क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ।
अनिच्छतोपि यस्य श्रीरङ्गान्न च्यवते कचित् ४८
सरिच्छैलवनोद्देशा गावो वेणुरवा इमे
संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ॥ ४९ ॥
पुनःपुनः स्मारयन्ति नन्दगोपसुतं बत ।
श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥
गत्या ललितयोदारहासलीलावलोकनैः ।
माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ५१
हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ।
मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात् ॥५२॥
श्रीशुक उवाच—
ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ।
उद्धवं पूजयांचक्रुर्ज्ञात्वाऽऽत्मानमधोक्षजम् ॥२३॥
उवास कतिचिन्मासान्गोपीनां विनुदञ्छुचः ।
कृष्णलीलाकथां गायन्नमयामास गोकुलम्॥५४॥
यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्स उद्धवः ।
व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया ॥५५
सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् ।
कृष्णं संस्मारयन्रेमे हरिदासो व्रजौकसाम् ॥५६॥

दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम् ।
उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७
एताः परं तनुभृतो भुवि गोपवध्वो
गोविन्द एव निखिलात्मनि रूढभावाः ।
वाञ्छन्ति यद्भवभियो मुनयो वयं च
किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ ५८ ॥
केमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृष्णे क चैष परमात्मनि रूढभावः ।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षा-
च्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ५९ ॥
नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥ ६० ॥
आसामहो चरणरेणुजुषामहं स्यां
बृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ६१ ॥
या वै श्रियाऽर्चितमजादिभिराप्तकामै-
र्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद्भगवतश्चरणारविन्दं
न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥ ६२ ॥
वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३॥
श्रीशुक उवाच—
अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ।
गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम्॥६४॥
तं निर्गतं समासाद्य नानोपायनपाणयः ।
नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥६५॥

१ विज० स्तप्तं । २ वीर० संजीवयिष्यन्नो । विज० संजीवयन्नव्रजं । ३ विज० विहृत्य नगरस्त्रीभिः प्रीतः । ४ वीर० क्रियेतेर्थो महात्मनः । ५ विज० सुखं हि । ६ विज० नाक्रीडिताः । ७ विज० श्रीनिकेते तत्पदके । ८ विज० कथं तद्विस्मरामहे । ९ वीर० वृजिनार्णवे । १० विज० पञ्चचत्वारिंशोऽध्यायः । ११ विज० विरहामयाः । १२ वीर० ज्ञात्वा स्निग्धमधोक्षजे । १३ वीर० कुसुमितद्रुमान् । १४ विज० कृष्णक्रीडासमं ।

१ वीर० तनुभृतो ननु । विज० तनुभृतां भुवि । २ उभ० एवमखिलात्मनि । ३ विज० कथा न यत्र । ४ उभ० वनचरा व्यभिचारशीलाः । ५ विज० क चैव । ६ विज० श्रियो ननु नितान्त । ७ विज० च ललिताङ्गरुचां कुतोन्यः । ८ विज० न्यस्य ।

मनसो वृत्तयो नः स्युः कृष्णपादांबुजाश्रयाः ।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ६६
कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाच रितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ६७ ॥

एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ।
उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥६८॥
कृष्णाय प्रणिपत्याऽऽह भक्त्युद्रेकं व्रजौकसाम् ।
वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥६९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

श्रीकृष्णेन त्रिवक्राया गृहगमनं ॥ १ ॥ अक्रूरगृहगमनं ॥ २ ॥ तस्य हास्तिनपुरीप्रेषणं ॥ ३ ॥

**श्रीशुक उवाच—**

अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः ।
सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ ॥१॥
महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ।
मुक्तादामपताकाभिर्वितानशयनासनैः ।
धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ।
[कामशास्त्रश्रुतालेख्यैर्नानावर्णैः सुशोभनैः॥२॥]
गृहं तमायान्तमवेक्ष्य साऽऽसना-
त्सद्यः समुत्थाय हि जातसंभ्रमा ।
यथोपसङ्गम्य सखीभिरच्युतं
सभाजयामास सदासनादिभिः ॥ ३ ॥
तथोद्धवः साधुतयाऽभिपूजितो
न्यषीददुर्व्यामभिमृश्य चासनम् ।
कृष्णोऽपि तूर्णं शयनं महाधनं
विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥
सा मज्जनालेपदुकूलभूषण-
स्रग्गन्धतांबूलसुधासवादिभिः ।
प्रसाधितात्मोपससार माधवं
सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥
आहूय कान्तां नवसङ्गमह्रिया
विशङ्कितां कङ्कणभूषिते करे ।
प्रगृह्य शय्यामधिवेश्य रामया
रेमेऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥
साऽनङ्गतप्तकुचयोरुरसस्तथाऽक्ष्णो-
र्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ।
दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्त-
मानन्दमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥
सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ।
अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥
आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया
रमस्व नोत्सहे त्यक्तुं सङ्गं तेंबुरुहेक्षण ॥ ९ ॥
तस्यै कामवरं दत्त्वा मानयित्वा च मानदः ।
सहोद्धवेन सर्वेशः स्वधामागमदर्चितम् ॥ १० ॥
दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ।
यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥११॥
अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ।
किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया ॥१२॥
स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान् ।
प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनन्द्य च॥१३॥
ननाम कृष्णं रामं च स तैरप्यभिवादितः ।

१ विज० स्तत्प्रवणादिषु । २ विज० प्रीतिं यच्छन् । ३ विज० महार्होपस्करोपेतं । ४ वीर० इदमर्धमधिकं । ५ वीर० सुजात । ६ विज० अथोपसं । ७ विज० सहा । ८ वीर० अथोद्धवः । ९ वीर० नूनं । विज० दान्तं ।

१ विज० षट्चत्वारिंशोऽध्यायः । २ वीर० गात्रसमृद्धिमत् । विज० गमदृद्धिमत् । ३ उभ० याऽवृणीत । ४ विज० कुमतिर्ह्यसौ । ५ विज० चिकीर्षन्सप्रा । ६ उभ० भ्यनन्दत । ७ विज० अयं श्लोको नास्ति ।

पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १४ ॥
पादावनेजनीरापो धारयञ्छिरसा नृप ।
अर्हणेनांबरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १५ ॥
अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन् ।
प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥
दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ।
भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम् ॥१७॥
युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ।
भवद्भ्यां न विना किंचित्परमस्ति न चापरम् १८
आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः
ईयते बहुधा ब्रह्मञ्छ्रुतप्रत्यक्षगोचरम् ॥ १९ ॥
यथा हि भूतेषु चराचरेषु
मह्यादयो योनिषु भान्ति नाना ।
एवं भवान्केवल आत्मयोनि-
ष्वात्माऽऽत्मतन्त्रो बहुधा विभाति ॥ २० ॥
सृजस्यथो लुंपसि पासि विश्वं
रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ।
न बध्यसे तद्गुणकर्मभिर्वा
ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ २१ ॥
देहाद्युपाधेरनिरूपितत्वा-
द्भवो न साक्षान्नभिदाऽऽत्मनः स्यात् ।
अतो न बन्धस्तव नैव मोक्षः
स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥
त्वयोदितोऽयं जगतो हिताय
यदायदा वेदपथः पुराणः ।
बाध्येत पाखण्डपथैरसद्भि-
स्तदा भवान्सत्त्वगुणं बिभर्ति ॥ २३ ॥
स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः
स्वांशेन भारमपनेतुमिहासि भूमेः ।
अक्षौहिणीशतवधेन सुरेतरांश-
राज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २४ ॥
अद्येश नो वसतयः खलु भूरिभागा
यः सर्वदेवपितृभूतनृदेवमूर्तिः ।
यत्पादशौचसलिलं त्रिजगत्पुनाति
स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २५ ॥
कः पण्डितस्त्वदपरं शरणं समीया-
द्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्वान्ददाति सुहृदो भजतोऽभिकामा-
नात्मानमप्युपचयापचयौ न यस्य ॥ २६ ॥
दिष्ट्या जनार्दन भवानिह नः प्रतीतो
योगेश्वरैरपि दुरापगतिः सुरेशैः ।
छिन्ध्याशु नः सुतकलत्रधनाप्तगेह-
देहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥
इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः ।
अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव ॥२८॥
श्रीभगवानुवाच—
त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ।
वयं तु रक्ष्याः पोष्याश्च अनुकंप्याः प्रजा हि वः॥
भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ।
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ३०
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ३१ ॥
स भवान्सुहृदां वै नः श्रेयाञ्छ्रेयश्चिकीर्षया ।
जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम्३२
पितर्युपरते बालाः सह मात्रा सुदुःखिताः ।
आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥३३॥
तेषु राजांबिकापुत्रो भ्रातृपुत्रेषु दीनधीः ।
समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥
गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ।
विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ३५

१ विज० सानुगः पावितं कुलं । २ विज० अन्वावेश्य । ३ उभ० श्रुतिप्रत्यक्षगोचरः । ४ विज० त्वं गुण । ५ विज० क्व च नैव हेतुः । ६ विज० हि साक्षान्न चिदात्मनः । वीर० न साक्षाच्च चिदात्मनः । ७ उभ० निकामं ।

१ विज० यत्सर्व । २ वीर० ददाति हि भवान्भजतो । ३ विज० भजतोपि । ४ विज० देहाभिमोह । ५ वीर० भागवता । ६ विज० किंचिच्छ्रेय । ७ उभ० गच्छस्व गजसाह्वयं । ८ विज० विचार्य ।

इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः । सङ्कर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥३६॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

हास्तिनपुरं प्राप्तवताऽक्रूरेण धृतराष्ट्रस्य पाण्डवेषु विषमां बुद्धिं ज्ञात्वा मधुरागमनं ॥ १ ॥

**श्रीशुक उवाच**—

स गत्वा हास्तिनपुरं पौरवेन्द्रयशोऽङ्कितम् ।
ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥ १ ॥
सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् ।
कर्णं सुयोधनं द्रौणिं पाण्डवान्सुहृदोऽपरान् ॥२॥
यथावदुपसंगम्य बन्धुभिर्गान्दिनीसुतः ।
संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥३॥
उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया ।
दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ४॥
तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ।
प्रजानुरागं पार्थेषु नसहद्भिश्चिकीर्षितम् ॥ ५ ॥
कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ।
आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥६॥
पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ।
उवाच जन्मनिलयं स्मरन्त्यश्रुकलेक्षणा ॥ ७ ॥
अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे ।
भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ८
भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ।
पैतृष्वसेयान्स्मरति रामश्चांबुरुहेक्षणः ॥ ९ ॥
सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ।
सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान्
कृष्णकृष्ण महायोगिन्विश्वात्मन्विश्वभावन ।
प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ११
नान्यत्तव पदांभोजात्पश्यामि शरणं नृणाम् ।
बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥१२॥
नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।
योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥

**श्रीशुक उवाच**—

इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ।
प्रारुदद्दुःखिता राजन्भवतां प्रपितामही ॥१४॥
समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ।
सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः १५
यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ।
अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥१६॥

**अक्रूर उवाच**—

भोभो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ।
भ्रातर्युपरते पाण्डावधुनाऽऽसनमास्थितः ॥ १७॥
धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् ।
वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि १८
अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ।
तस्मात्समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥१९॥
नेह चात्यन्तसंवासः कर्हिचित्केनचित्सह ।
राजन्स्वेनापि देहेन किमु जायात्मजादिभिः २०
एकः प्रसूयते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥
अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ।
संभोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥

---

१ वीर० कौरवेन्द्र । २ वीर० दिदृक्षया । ३ विज० दुष्प्रज्ञस्या । ४ विज० यकौशलं । ५ विज० मेतस्मै । ६ विज० सर्वात्मन्विश्वपालक । ७ विज० पश्यामः ।

१ विज० सप्तचत्वारिंशोऽध्यायः । २ विज० प्रावद । ३ विज० पाण्डौ बन्धूनां सममास्थितः । ४ विज० समत्वं । ५ वीर० त्मजादिषु । ६ विज० चेतसः ।

पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ।
तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः २३
स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ।
असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥२४॥
तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ।
वीक्ष्यायम्यात्मनाऽऽत्मानं समः शान्तो भव प्रभो॥

**धृतराष्ट्र उवाच—**

यथा वदति कल्याणीं वाचं दानपते भवान् ।
तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् २६
तथाऽपि सूनृता सौम्य हृदि न स्थीयते चले ।
पुत्रानुरागविषमे विद्युत्सौदामनी यथा ॥ २७ ॥
ईश्वरस्य विधिं कोऽनु विधुनोत्यन्यथा पुमान् ।
भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥२८॥
यो दुर्विमर्शपथया निजमाययेदं
सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ।
तस्मै नमो दुरवबोधविहारतन्त्र-
संसारचक्रगतये परमेश्वराय ॥ २९ ॥

**श्रीशुक उवाच—**

इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ।
सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥
शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ।
पाण्डवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ३१

इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
पूर्वार्धे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

श्रीकृष्णार्पणमस्तु ॥

दशमस्कन्धपूर्वार्धं संपूर्णम् ॥



१ विज० अन्तेऽकृतार्थां हिण्वन्ति । २ विज० संभजन्नात्मना । ३ वीर० यदा । ४ वीर० तदा ।

१ विज० अष्टचत्वारिंशोऽध्यायः ।

॥ श्रीः ॥

श्रीगोपालकृष्णाय नमः ।

# श्रीमद्भागवतम् ।

## दशमस्कन्धः उत्तरार्धम् १०

### पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

कंसभार्याभ्यां स्वपितरि जरासन्धे श्रीकृष्णकृतस्वभर्तृवधकथनं ॥ १ ॥ क्रुद्धस्य जरासन्धस्य सर्वयादवसंहारार्थं मथुरागमनं ॥ २ ॥ श्रीकृष्णेन स्वीयजनरक्षणार्थं द्वारकानिर्माणम् ॥ ३ ॥

॥ ॐ नमोभगवते वासुदेवाय ॥

**श्रीशुक उवाच—**

अस्तिः[1] प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ।
मृते भर्तरि[2] दुःखार्ते ईयतुः स्म[3] पितुर्गृहान् ॥१॥
पित्रे मगधराजाय जरासन्धाय दुःखिते ।
वेदयाश्चक्रतुः सर्वमात्मवैधव्य[4]कारणम् ॥ २ ॥
स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप ।
अयादवीं[5] महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥
अक्षौहिणीभिर्विंशत्या[6] तिसृभिश्चापि संवृतः ।
यदुराजधानीं मथुरां न्यरुणत्सर्वतो दिशम् ॥४॥
निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ।
स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥
चिन्तयामास भगवान्हरिः कारणमानुषः ।
तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥
हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम् ।
मागधेन समानीतं वश्यानां[7] सर्वभूभुजाम् ॥७॥
अक्षौहिणीभिः सङ्ख्यातं भटाश्वरथकुञ्जरैः[8] ।
मागधस्तु[1] न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥८॥
एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥९॥
अन्योऽपि धर्मरक्षायै देहः संभ्रियते मया ।
विरामायाप्यधर्मस्य[2] काले प्रभवतः क्वचित् ॥१०॥
एवं ध्यायति गोविन्द आकाशात्सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥११॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया ।
[एवं[3] ध्यायति गोविन्दे मागधाधिपतिर्बली ।
मधुरां सवनोद्यानां रुरोध बहुसैनिकः ॥ १ ॥
कलिङ्गश्चेकितानश्च दन्तवक्रविदूरथौ ।
उल्मुको वेणुदारी च साल्वश्चैद्यश्च दुर्मतिः ॥२॥
पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया ।
विन्दानुविन्दावावन्त्यौ विराटो दरदस्तथा ॥३॥
एकलव्यो बाह्लिकश्च तथा पञ्चनदेश्वरः ।
रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महाबलः ॥ ४ ॥
युधामन्युर्बृहत्क्षत्रः साल्वो भूरिश्रवास्तथा ।

---

१ वीर० अस्तिः प्रास्तिश्च । विज० अस्ति प्रास्तीति । २ उभ० हते । ३ विज० स्वपितु । ४ विज० वैरूप्य । ५ वीर० अयादवां । ६ विज० विंशद्भिः । ७ वीर० वंश्यानां । विज० पश्यतां सर्वभूभृतां । ८ वीर० रथसङ्कुलं ।

१ विज० मागधोपि । २ विज० विरामाय ह्यधर्मस्य । ३ विज० अयं सार्धः श्लोकः कुण्डलितपाठे किंचित्पाठभेदेन (११) श्लोकतया वर्तते । ४ विज० एते षोडश श्लोका अधिका दृश्यन्ते मुनिभावप्रकाशिकापाठेपि वर्तन्ते ।

उत्तमौजाश्च रुक्मी च द्रुमश्चैव सुदक्षिणः ॥५॥
एते नियुक्ता राजानो जरासन्धेन भारत ।
पश्चिमद्वारमासाद्य रुरुधुर्मधुरां पुरीम् ॥ ६ ॥
द्रुपदः शिशुपालश्च त्रिगर्तोथ जयद्रथः ।
शकुनिः सोमदत्तश्च कुणिन्दश्च महाबलः ॥७॥
जरासन्धेन सहिताः सर्वे मदबलान्विताः ।
उत्तरद्वारमासाद्य रुरुधुर्भरतर्षभ ॥ ८ ॥
ते निरुध्य चतुर्द्वाराण्युद्वेलांभोधिसंनिभाः ।
सिंहनादं च कुर्वन्तो दध्मुः शङ्खाननेकशः ।
क्ष्वेलन्तो युद्धसंनद्धा जघ्नुर्भेरीः सहस्रशः ॥९॥
तद्वीरभूपालकदंबजृंभितं
युगावसानर्णवघूर्णितोपमम् ।
निशम्य कृष्णो न चचाल चेतसा
सृगालघोषं मृगराडिवोद्धतः ॥ १० ॥
एतस्मिन्नेव काले तु गगनात्सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥११॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया ।
चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ॥१२॥
गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा ।
त्रिणतं कार्मुकश्रेष्ठं शार्ङ्गसंज्ञं गुणान्वितम् ॥१३॥
तीक्ष्णधारः शितमुखः खड्गो नन्दकसंज्ञितः ।
लघू शरान्वितौ रम्यौ तूणौ चाक्षयसायकौ ॥१४
तुरगाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ।
हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥ १५ ॥
इत्येतान्यायुधान्याजौ गगनादागतानि सः१६॥]
दृष्ट्वा तानि हृषीकेशः सङ्कर्षणमथाऽब्रवीत्[2]॥१२॥
पश्याऽऽर्य व्यसनं प्राप्तं यदूनां त्वावतां[3] प्रभो ।
एष ते रथ आयातो दयितान्यायुधानि च॥१३॥
यानमास्थाय[4] जह्येतद्व्यसनात्स्वान्समुद्धर ।
एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत्[5] १४
त्रयोविंशत्यनीकाख्यं[6] भूमेर्भारमपाकुरु ।

एवं संमन्त्र्य दाशार्हौ दंशितौ रथिनौ[1] पुरात् १५
[दंशितैश्च[2] यदुश्रेष्ठैर्बहुभिश्च समन्वितौ ।]
निर्जग्मतुः[3] स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ ।
शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥१६॥
ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ।
तावाह मागधो वीक्ष्य हेकृष्ण पुरुषाधम ॥१७॥
न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ।
गुप्तेन हि त्वया मन्द न योत्स्ये याहि बन्धुहन् १८
तव राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह ।
हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि १९

**श्रीभगवानुवाच—**

न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् ।
न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥
[निर्गत्य[4] सदनात्कृष्णो वृष्णीनाहूय सर्वशः ।
आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥ १ ॥
वसुदेवं च निशठं कृतवर्माणमुद्धवम् ।
कृष्णो निर्यातयामास पूर्वद्वारेण भारत ॥ २ ॥
उग्रसेनं सुदामानं पृथुं विपृथुमेव च ।
हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥ ३ ॥
सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम् ।
हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान् ॥ ४ ॥
गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः ।
आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥ ५ ॥
उत्तरेण विनिर्गत्य द्वारेण जगदीश्वरः ।
शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् ।
आह दारुकमासीनं रथाग्रे माधवः स्मयन् ॥६॥

**श्रीभगवानुवाच—**

रथं वाहय धर्मज्ञ यत्र तौ चैद्यमागधौ ।
तर्पयामि नृपान्सर्वान्सायकैर्युद्धदुर्मदान् ॥ ७ ॥

**श्रीशुक उवाच—**

इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत् ।

---

१ विज० अयं सार्धः श्लोकः श्रीधरीयपाठस्थैकादशेन श्लोकेन गतार्थः । २ विज० राजन्हृषीकेशः । ३ वीर० सात्वतां प्रभो । ४ वीर० एनमास्थाय । ५ विज० सत्कृतं । ६ विज० त्रयोविंशत्यनीकानां ।

१ विज० रथिनां वरौ । २ विज० इदमर्धमधिकं । ३ विज० निर्जग्मतुः पुरवराद्बलेनाल्पीयसा नृप । ४ विज० एतदारभ्य २० श्लोकपर्यन्ताः श्लोका न दृश्यन्ते । ५ विज० कुण्डलिताश्चतुर्दश श्लोका अधिका दृश्यन्ते । मुनिभावप्रकाशिकापाठेपि वर्तन्ते ।

व्यनदत्सिंहनादं च गोविन्दः परवीरहा ॥८॥
शङ्खमाध्माय रामोपि सिंहनादं व्यनीनदत् ।
ततोऽभूत्परसैन्यानां हृदि चिन्ता सवेपथुः ॥९॥
पूर्वद्वारि नृपैः सार्धं यदूनां कदनं महत् ।
आसीच्चतुर्भिरष्टानां तदद्भुतमिवाभवत् ॥ १० ॥
दक्षिणद्वार्यपि तथा गोविन्दाध्मातचेतसाम् ।
आसीद्यदूनां कदनं राजन्यकटकेन वै ॥ ११ ॥
अपरद्वार्यपि तथा यदूनां दृढधन्विनाम् ।
आसीद्राजसमाजेन सङ्ग्रामो रोमहर्षणः ॥१२॥
ते हन्यमाना यदवो राजभिः शक्रविक्रमैः ।
न चेलुः सङ्गराद्राजँल्लोकद्वयजिगीषवः ॥ १३ ॥
तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः ।
आससाद महाघोरौ यत्र तौ चैद्यमागधौ ॥१४॥]

**श्रीशुक उवाच—**

जरासुतस्तावभिसृत्य माधवौ
महाबलौघेन बलीयसाऽऽवृणोत् ।
ससैन्ययानध्वजवाजिसारथी
सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥ २१ ॥
सुपर्णतालध्वजचिह्नितौ रथा-
वलक्षयन्त्यो हरिरामयोर्मृधे ।
स्त्रियः पुराट्टालकहर्म्यगोपुरं
समाश्रिताः संमुमुहुः शुचाऽर्दिताः ॥ २२ ॥
हरिः परानीकपयोमुचां मुहुः
शिलीमुखात्युल्बणवर्षपीडितम् ।
स्वसैन्यमालोक्य सुरासुरार्चितं
व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ २३ ॥
गृह्णन्निषङ्गादथ सन्दधच्छरा-
न्विकृष्य मुञ्चञ्छितबाणपूगान् ।
निघ्नन्रथान्कुञ्जरवाजिपत्ती-
न्निरन्तरं यद्वदलातचक्रम् ॥ २४ ॥
[ततः शशाङ्काकृतिपाञ्चजन्यं
महारवं दैत्यकुलापचारम् ।
मुखे निधायाशु पुपूर यादवा-
नाश्वासयन् क्षत्रियकूटघट्टितान् ॥ १ ॥
नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं
क्रमेण निर्भिन्नहृदो बभूविरे ।
यदुप्रवीराश्च समुद्यतायुधा
रणे नृपाञ्जघ्नुरनीकसंयुताः ॥ २ ॥
ततश्चतुर्द्वारगतान्महीपती-
न्यदुप्रवीराः परिभूय सर्वशः ।
चक्रुः शरौघैः सहसैकवाहिन
आप्यायिताः शार्ङ्गरवेण शौरिणा ॥ ३ ॥
ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः ।
भर्त्सयन्कृष्णकृष्णेति तिष्ठतिष्ठेति चाब्रवीत् ॥४॥
तमभ्यधावद्गोविन्दो विमुञ्चन्सायकान्बहून् ।
मण्डलीकृतकोदण्डस्तैलधौताञ्छिताञ्शरान् ॥५॥
ततः पञ्च शरान्घोरानादाय दमघोषजः ।
चतुर्भिस्तुरगानाशु विव्याधैकेन सारथिम् ॥६॥
भूयो दशाशु सन्धाय विव्याध मधुसूदनम् ।
व्यनदत्सिंहनादं च तदद्भुतमिवाभवत् ॥ ७ ॥
ततस्तमाह गोविन्दः साधुसाध्विति पूजयन् ।
भोभो चैद्य महेष्वास वीरोसि बलवानसि ॥८॥
अतो मे पश्य दुर्बुद्धे धानुष्मत्त्वं स्वयं रणे ।
इति ब्रुवति गोविन्दे राजानः सर्व एव ते ॥९॥
विव्यधुर्निशितैर्बाणैर्यौगपद्येन माधवम् ।
तांस्तान्प्रत्येकशः कृष्णो विद्ध्वा पञ्चभिराशुगैः१०
सारथिं चतुरो वाहाननयद्यमसादनम् ।
त्रिभिस्त्रिभिः शरैर्भूयोप्येकैकं नृपतीन्रणे ॥११॥
वक्षस्यास्ये ललाटे च विव्याध यदुनन्दनः ।
ततश्च त्रिंशतां राज्ञां त्रिंशत्कार्मुकमाहवे ॥१२॥
त्रिंशद्भिः सायकैराशु चिच्छेद यदुपुङ्गवः ।
दमघोषसुतस्यापि धनुश्छित्वा त्रिभिः शरैः॥१३॥
ध्वजं च मुकुटच्छत्रे चकर्त प्रहसन्निव ।
ततो दश हरिर्भल्लाञ्शार्ङ्गे सन्धाय माधवः॥१४
आकर्णान्तं समाकृष्य चैद्यं विव्याध सङ्गरे ।
तेन राजन्यकटकं विभ्रान्तं शरताडितम् ॥१५॥

१ वीर० वभिगम्य । विज० वमिवीक्ष्य । २ उभ० शुचार्पिताः । ३ विज० व्याघूर्णयच्छार्ङ्ग । ४ विज० सप्तदश श्लोका अधिका दृश्यन्ते मुनिभावप्रकाशिकापाठेपि दृश्यन्ते ।

कालान्तमारुतोद्धूतशलद्रुमलतोपलम् ।
त्रातारं नाध्यगच्छद्वै हताश्वरथसारथि ॥ १६ ॥
शरान्विमुञ्चञ्जलजं च पूरय-
न्विस्फूर्जयन्कार्मुकमुग्रपौरुषः।
विलोकयन्मागधसैन्यमाहवे
निरन्तरं यद्वदलातचक्रम् ॥ १७ ॥]
निर्भिन्नकुंभाः करिणो निपेतु-
रनेकशोऽश्वाः शरवृक्णकन्धराः ।
रथा हताश्वध्वजसूतनायकाः
पदातयश्छिन्नभुजोरुकन्धराः ॥ २५ ॥
संछिद्यमानद्विपदेभवाजिना-
मङ्गप्रसूताः शतशोऽसृगापगाः ।
भुजाऽहयः पूरुषशीर्षकच्छपा
हतद्विपद्वीपहयग्रहाकुलाः ॥ २६ ॥
करोरुमीना नरकेशशैवला
धनुस्तरङ्गायुधगुल्मसंकुलाः ।
अच्छूरिकावर्तभयानका महा-
मणिप्रवेकाभरणाश्मशर्कराः ॥ २७ ॥
प्रवर्तिता भीरुभयावहा मृधे
मनस्विनां हर्षकरीः परस्परम् ।
विनिघ्नताऽरीन्मुसलेन दुर्मदा-
न्सङ्कर्षणेनापरिमेयतेजसा ॥ २८ ॥
बलं तदङ्गार्णवदुर्गभैरवं
दुरन्तपारं मगधेन्द्रपालितम् ।
क्षयं प्रणीतं वसुदेवपुत्रयो-
र्विक्रीडितं तज्जगदीशयोः परम् ॥ २९ ॥
स्थित्युद्भवान्तं भुवनत्रयस्य यः
समीहतेऽनन्तगुणः स्वलीलया ।
न तस्य चित्रं परपक्षनिग्रह-
स्तथाऽपि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥
[हतेषु सर्वसैन्येषु जरासन्धो महाबलः ।

१ वीर० आस्थूरिकावर्त । विज० आस्फूर्जितावर्त । २ विज० हर्षवहाः । ३ विज० पञ्च श्लोका अधिकाः। मुनिभावप्रकाशिकापाठेपि ते वर्तन्ते ।

विद्रुतेष्ववशिष्टेषु रथेनैकेन सीरिणम् ॥ १ ॥
तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ ।
परस्परमयुध्येतां सामर्षौ बलशालिनौ ॥ २ ॥
मागधस्तु गदां गुर्वीमादायामर्षविह्वलः ।
भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ॥ ३ ॥
तामापतन्तीं तरसा गदां शृङ्गोपमां गिरेः ।
व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ॥४॥
व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः ।
पोथयित्वा रथे क्षुब्धो निहत्य रथसारथी ॥५॥]
जग्राह विरथं रामो जरासन्धं महाबलम् ।
हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥३१॥
बध्यमानं हतारातिं पाशैर्वारुणमानुषैः ।
वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥३२॥
स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः ।
तपसे कृतसंकल्पो वारितः पथि राजभिः ॥३३॥
वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ।
स्वकर्मबन्धप्राप्तोऽयं यदुभिस्ते पराभवः ॥ ३४ ॥
हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ।
उपेक्षितो भगवता मगधान्दुर्मना ययौ ॥ ३५ ॥
मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ।
[गृहीत्वा मगधेन्द्रस्य धनं स्त्रीकोशवाहनम् ।]
विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥
माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ।
उपगीयमानविजयः सूतमागधवन्दिभिः ॥३७॥
शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ।
वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ३८ ॥
सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् ।
निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥
निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः ।
निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ४०

१ वीर० सिंहः क्षुद्रमृगं यथा । २ उभ० वनं विविक्षुस्तपसे वारितः । ३ विज० अयं श्लोको नास्ति । ४ वीर० विचित्रार्थपदै । ५ विज० मागधो दुर्मना । ६ विज० इदमर्धमधिकं । ७ वीर० प्रीत्युत्कण्ठित ।

आयोधनगतं वित्तमनन्तं वीरभूषणम्[1] । यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥ ४१ ॥

# [ विजयध्वजीयपाठे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

जरासन्धेन तृतीये मासि पुनश्च श्रीकृष्णेन सह युद्धायागमनम् ॥ १ ॥ ]

[ श्रीशुक उवाच—
तृतीये मासि भूयश्च राजा बार्हद्रथो बली ।
दिवाऽनिशं तप्यमानः स्मरन्पूर्वपराभवम् ॥ १ ॥
आहूय सर्वभूपालांश्चकार कलहोद्यमम् ।
स मत्स्यान्मालवांश्चेदीन्कुरुपाञ्चालकेरलान् ॥२॥
कुलिन्दकुन्तलावन्तिकाशिगान्धारसृञ्जयान् ।
कलिङ्गकेकयानान्ध्रान्दशार्णान्वङ्गसैन्धवान् ॥३॥
मद्रांस्त्रिगर्तान्सौवीरान्पार्वतेयांश्च सर्वशः ।
आहूयाक्षौहिणिगणैस्त्रयोविंशतिभिर्युतः ॥ ४ ॥
स मागधानतिक्रम्य पश्चिमाभिमुखो ययौ ।
आकर्षन्निव भूपालान्गजाश्वरथवल्लभान् ॥ ५ ॥
आगत्य मधुरां रोद्धुं प्राविशद्यमुनातटे ।
स्कन्धावारेण महता राजभिर्बहुभिर्वृतः ॥ ६ ॥
उपगीयमानो न्यरमत्सूतमागधवन्दिभिः ।
तदाकर्ण्य रणोद्योगं मागधस्य बलीयसः ॥ ७ ॥
मन्त्रयामास शर्वर्यां कृष्णः सङ्कर्षणादिभिः ।
वसुदेवोद्धवाक्रूरशैनेयाहुकसारणैः ॥ ८ ॥
एभिरालोच्य शर्वर्यां सम्यङ्निर्धारितक्रियः ।
उषस्यनुदिते सूर्ये समाहूय भटोत्तमान् ॥ ९ ॥
त्रिधा विभज्य गोविन्दः स्वसेनां चतुरङ्गिणीम् ।
न्ययोजयदमेयात्मा मागधेन्द्रबलं प्रति ॥ १० ॥
सङ्कर्षणं च हार्दिक्यं गदं सारणमेव च ।
वामेन प्रेषयामास मार्गेण मधुसूदनः ॥ ११ ॥
सात्यकिं विपृथुं चैव पृथुमुद्धवमेव च ।
दक्षिणेनैव मार्गेण प्राहिणोत्सेनया सह ॥ १२॥
स्वयं कतिपयैर्युक्तो रथैः कमललोचनः ।
अग्रे मगधराजस्य प्रविवेश महद्बलम् ॥ १३ ॥
सा सेना बहुनागाश्वरथपादातिसङ्कुला ।
प्रसुप्ता यमुनातीरे विस्रब्धा रमते सुखम् ॥१४॥
उदयाद्रिं समारोहत्यर्के तमसि नश्यति ।
नीडस्थेष्वेव कूजत्सु विहङ्गेषु ततस्ततः ॥ १५ ॥
विकसत्सु सरोजेषु गायत्स्वलिकुलेषु च ॥
प्रविवेश बलं भीमं मागधेन्द्रस्य दुर्जयम् ॥ १६॥
हयाश्चाबद्धवैराणाः श्रेणीबद्धाः समन्ततः ।
कुञ्जराश्च तदा राजन्ननारोपितपञ्जराः ॥ १७ ॥
अनादत्तप्रहरणा भटाश्चाबद्धमूर्धजाः ।
अप्रविष्टास्तवर्माणस्तदाऽनारूढवाहनाः ॥ १८ ॥
रथाश्चाबद्धतुरगाः सर्वतोऽनुद्धृतध्वजाः ।
सेनायां मगधेन्द्रस्य प्रवेशे पीतवाससः ॥ १९ ॥
त्रिदिक्ष्वापतितं सैन्यं दृष्ट्वा तद्राजमण्डलम् ।
इतिकर्तव्यतामूढं विभ्रान्तं समपद्यत ॥ २० ॥
केचिद्भटाः समापेतुर्भयात्केचिच्च दुद्रुवुः ।
केचिदात्तप्रहरणास्त्वभिसस्रुररीन्रणे ॥ २१ ॥
केचिद्विभिन्नवर्माणश्छिन्नपादोरुबाहवः ।
रिपूनेवाभ्यवर्तन्त क्रोधोद्वृत्तारुणेक्षणाः ॥२२॥
केचिद्भयानपर्याणानारुह्य दृढविक्रमाः ।
मर्दयन्तो रिपून्युद्धे विमलं लेभिरे यशः ॥ २३॥
राजानः सहसोद्बुध्य दृष्ट्वा सैनिकसंक्षयम् ।
विना रणोपस्करणं चक्रुः केचन सङ्गरम् ॥२४॥
केचिद्विसृज्य शिबिरं विविशुर्गहनं वनम् ।
केचिन्मागधमासाद्य विजयस्वेति चाब्रुवन् ॥२५॥
रथेनैकेन गोविन्दः प्रविश्य रिपुवाहिनीम् ।
जघान सुबहून्वीरान्सायुधान्सरणोद्यमान् ॥२६॥
सङ्कर्षणापि बलवान्महत्या सेनया वृतः ।

[1] वीर० वित्तमाहृतं ।

[1] विज० अत्र एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥ इतः परं विजयध्वजीयपाठे त्रयोध्यायाः चतुर्विंशतिः श्लोकाश्चाधिका दृश्यन्ते ।

बलं प्रविश्य वामेन मर्दयामास मागधम् ॥२७॥
योपि महाबाहुर्दक्षिणेनैव वर्त्मना ।
प्रविश्य चतुरङ्गेण सैन्येन महताऽर्दयत् ॥ २८ ॥
एवं सा व्यथिता सेना मागधेन्द्राभिरक्षिता ।
दुद्राव त्रास्यमाना वै क्षणमात्रं दिशो दश ॥२९॥
तामनुद्रुत्य वार्ष्णेयः सात्यकिः पञ्च योजनम् ।
निहत्य मागधं सैन्यं जयी व्यावर्तताहवात् ॥३०॥
मतङ्गजान्पर्वतसंनिभान्बहू-
न्निगृह्य सोपस्करतोमराङ्कुशान् ।
रथांश्च शस्त्रध्वजवाजिसंयुता-
न्निनाय कृष्णो मधुरां मनोरमाम् ॥ ३१ ॥
छत्राणि हेमाबररत्नमिश्रिता-
न्यनेकवालव्यजनानि माधवः
किरीटपट्टाङ्गदकुण्डलांशुका-
न्यवाप कृष्णोऽगणितानि संयुगे ॥ ३२ ॥
हलायुधो मागधकोशवाहन-
प्रजावरोधायुधभूषणादिकम् ।
नियोजितः कंसभिदा रणार्जितं
यदुप्रवीराय धनं न्यवेदयत् ॥ ३३ ॥

विजयध्वजीयपाठे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ]

## [ विजयध्वजीयपाठें एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

बाणासुरं युद्धे सहायं वरीतुं जरासन्धस्य शोणितपुरगमनं ॥ १ ॥ तत्प्रेषिताभ्यां कुंभाण्डकूपकर्णाभ्यां सहागत्य मधुरां निरुध्य युद्धारंभः ॥ २ ॥ पराजितयोः कुंभाण्डकूपकर्णयोः रणात्प्रतिनिवृत्य शोणितपुरगमनं ॥ ३ ॥ ]

**श्रीशुक उवाच—**
मागधस्तु रणश्लाघी माधवेन पराजितः ।
जगाम शोणितपुरं बाणं द्रष्टुं बलेः सुतम् ॥ १ ॥
तं तथा यान्तमाकर्ण्य वृतराजन्यमण्डलम् ।
मित्रं पराजितं युद्धे विष्णुना दानवेश्वरः ॥ २ ॥
अलङ्कृतैर्गजैरश्वैर्विचित्रस्यन्दनैर्भटैः ।
वारकान्ताकदंबैश्च सूतमागधवन्दिभिः ॥ ३ ॥
ध्वजैः पताकैश्छत्रैश्च माङ्गल्यैः पटहस्वनैः ।
सुवर्णतोरणैश्छत्रैर्दीपैः कलशदर्पणैः ॥ ४ ॥
उपतस्थे जरासन्धं बाणो बाहुसहस्रवान् ।
तौ दृष्ट्वा परमस्निग्धौ परस्परमनोनुगौ ॥ ५ ॥
पूजां चक्रतुरन्योन्यमन्योन्यप्रियकारिणौ ।
ततोऽब्रवीज्जरासन्धो बाणमाभाष्य संसदि ॥६॥
दानवेन्द्र निबोधेदं गोपेनाधर्मचारिणा ।
रात्रौ चौर्यप्रतापेन वञ्चितोसि दुरात्मना ॥७॥
गृहीता बहवस्तुङ्गा मातङ्गा मदशालिनः ।
तुरङ्गमाश्च बहवो रथाश्च सपरिच्छदाः ॥ ८ ॥
द्वन्द्वेन सज्जमानं मामिमे भूपा न सेहिरे ।
निरुद्धस्तैरहं भूपैरेतैः समसुखासुखैः ॥ ९ ॥
त्वत्संनिधिमिहायातः साहाय्यं कुरु मे प्रभो ।
इत्युक्तस्तं निजपुरं प्रवेश्य बलिनन्दनः ॥ १० ॥
स राजमण्डलायाशु कारयामास सत्क्रियाम् ।
भोजनस्नानशयनगन्धतांबूलपूर्वकैः ॥ ११ ॥
अर्हणैरर्हयामास सराजन्यं जरासुतम् ।
तं भुक्तवन्तं विश्रान्तं दृष्टदर्शनकौतुकम् ॥१२॥
अलङ्कृतं सह नृपैरासीनं काञ्चनासने ।
उवाच दानवपतिर्नृपानाभाष्य सादरम् ॥ १३ ॥

**बाण उवाच—**
जरासन्ध निबोधेदं न मृषा कथ्यते मया ।
एते गजा इमे अश्वा इदं राज्यमिमाः प्रजाः ।
त्वदधीनमिदं विश्वं यच्चान्यद्वस्तु विद्यते ॥ १४ ॥

**श्रीशुक उवाच—**
इत्युक्त्वा प्रददौ तस्मै मागधाय बलेः सुतः ।
गजानां षष्टिसाहस्रं रथानां नियुतं तथा ।

प्रयुतं च तुराङ्गाणां मनोमारुतरंहसाम् ॥ १५ ॥
दानवानां प्रसिद्धानां मायासङ्ग्रामवेदिनाम् ।
त्रिशतं स्वात्मसाम्यानां ददौ बाणो बलेः सुतः १६
विचित्रशिबिकाच्छत्रव्यजनाकल्पवाससाम् ।
असंख्यातं ददौ राजन्भाण्डशय्यासनादिकम्१७
कुंभाण्डं कूपकर्णं च मन्त्रिणौ दैत्यसत्तमौ ।
आज्ञापयामास बाणः साहाय्यार्थं कुरूद्वह ॥१८॥
क्व सुरासुरसङ्घातसंहारणपटुर्हरिः ।
कुंभाण्डकूपकर्णौ क्व वराकौ बाणमन्त्रिणौ ॥१९॥
अजानतो विष्णुशक्तिं भूपाला विनशिष्णवः ।
चक्रुर्भूयो रणोद्योगं मागधेन प्रचोदिताः ॥२०॥
बाणेन समनुज्ञातो मागधः शोणितात्पुरात् ।
निर्गत्यानकभूपालचतुरङ्गबलान्वितः ।
दिनैः कतिपयैर्भूयो मधुरामन्वपद्यत ॥ २१ ॥
संनिरुध्य पुरद्वारं गोपुराट्टालतोरणैः ।
दीर्घिकोपवनोद्यानैरुपेतं सालभूषितम् ॥ २२ ॥
कुन्तैः कुठारैः कुद्दालैर्दण्डभारैश्च भूरिभिः ।
कर्षणस्थैश्च पाषाणैर्बभञ्ज परितः पुरम् ॥ २३ ॥
भज्यमाने पुरे तस्मिञ्श्रुत्वा मागधमागतम् ।
सन्नाहभेरीः सन्नाद्य रामकृष्णावमर्षिणौ ॥२४॥
रथाश्वकुञ्जरानीकैः सायुधैः सपरिच्छदैः ।
सात्यकिं कृतवर्माणमुग्रसेनं तथा गदम् ॥ २५ ॥
आहुकं वसुदेवं च पुरस्कृत्य महाबलौ ।
निर्जग्मतुरसंभ्रान्तौ दीप्तौ केसरिणौ यथा॥२६॥
मधुराया विनिर्गत्य कृष्णः कमललोचनः ।
पाञ्चजन्यं महाशङ्खं प्रदध्मौ रिपुभीषणम् ॥२७॥
ततः प्रववृते युद्धं यदूनां क्षत्रियैः सह ।
कुंभाण्डकूपकर्णौ च दानवौ बाणमन्त्रिणौ ॥२८॥
दैत्यसैन्येन महता वृतौ मायाविशारदौ ।
युयुधाते महावीर्यौ मायया वृष्णिभिः सह॥२९॥
स्वसैन्यं मायया क्लिष्टं दृष्ट्वा यादवसत्तमः ।
विज्ञानास्त्रेण तन्मायामपास्य निमिषान्तरे ।
सात्यकिं कृतवर्माणं प्रोवाचाहवलालसौ ॥३०॥
आभ्यां भवन्तौ रणदुर्मदाभ्यां
रणं सुघोरं कुरुतां रणप्रियौ ।
तावेवमुक्तौ कदनं भयानकं
महाबलौ संप्रति चक्रतुर्नृप ॥ ३१ ॥
चापेनैकेन गोविन्दः क्षत्रियैः शतसंमितैः ।
युयुधे न हि तच्चित्रं राजन्विश्वात्मनो हरेः ॥३२॥
केचिद्द्रुताः समापेतुः कुञ्जराश्छिन्नपुष्कराः ।
निपेतुर्बहवो राजंस्तुरङ्गाः कृत्तकन्धराः ॥ ३३ ॥
विशीर्णैरास्तृता पृथ्वी स्यन्दनैश्छिन्नबन्धनैः ३४
भटाश्च रुधिराक्ताङ्गाश्छिन्नपादोरुबाहवः ।
पेतुः कृत्तमहामूलाः किंशुका इव पुष्पिताः ३५
शार्ङ्गमुक्ताः शरगणाः कङ्कबर्हिणवाससः ।
तैलाक्ता नतपर्वाणः स्वर्णपुङ्खा अयोमुखाः ।
एकैकस्मिन्दशदश भटे चाश्वे शतंशतम् ॥३६॥
रथेरथे च साहस्रमयुतं च गजेगजे ।
अदृश्यन्त परानीके तदद्भुतमिवाभवत् ॥ ३७ ॥
तथा तैरर्द्यमानेषु चतुरङ्गेषु मागधः ।
रथेन क्रोडचिह्नेन बलभद्रमुपाद्रवत् ॥ ३८ ॥
स पूर्ववैरं नृपतिः स्मरन्रुषा
रथं महाकाञ्चनतालकूबरम् ।
आलक्ष्य दूरादधिगम्य रंहसा
जरासुतः प्राह हलायुधं गदी ॥ ३९ ॥
आदत्स्व ते मुसलं राम तूर्णं
येनाहितानिच्छसि जेतुमाहवे ।
बलं च बाह्वोस्तव दर्शयाशु मे
यावद्गदां न प्रहराम्यहं त्वयि ॥ ४० ॥
इत्येवमुक्तो मगधेश्वरेण
सङ्कर्षणोऽमर्षणविह्वलेक्षणः ।
आदाय घोरं मुसलं तडित्प्रभं
दण्डं यथा सूर्यसुतो युगक्षये ॥ ४१ ॥
आवर्तयित्वा मुसलं हलायुधः
सहस्रकृत्वो रिपुदर्पहारिणम् ।
धूमाङ्कुरोद्गीरिणमाशु तस्मै
चिक्षेप राजन्व्यनदद्धरिर्यथा ॥ ४२ ॥
रामबाहुविमुक्तेन मुसलेन जरासुतः ।
साश्वसूते रथे क्षुब्धे क्षणेन व्यंसितः स्वयम् ४३

ततः कालायसीं गुर्वीं गिरिकूटोपमां गदाम् ।
बिभ्रदुर्वीं पदा पृथ्वीं चालयन्नभ्यगाद्बलम्॥४४॥
तमापतन्तमालोक्य विरथं रोहिणीसुतः ।
तमेवाभ्यद्रवत्पद्भ्यां विसृज्य स्यन्दनं रणे ॥४५॥
पश्यतां सर्वभूतानां मागधः क्रोधविह्वलः ।
आवर्तयन्गदां गुर्वीमयःसारमयीं दृढाम् ।
अभ्येत्य गदया रामं प्रजहार ननाद च ॥४६॥
तां गदां पतितां वक्षस्यश्मकुट्टनिभां दृढाम् ।
वामेन जगृहे रामः स्वहस्तेन कुरूद्वह ॥ ४७ ॥
विसृज्य स गदां तूर्णमुरस्याहत्य मागधम् ।
जग्राहाश्लिष्य बलिनं बलवान्रोहिणीसुतः॥४८॥
बबन्ध पद्भ्यां जठरं मागधस्य हलायुधः ।
चकार कुक्षौ तत्कण्ठं ततस्तौ पेततुर्भुवि ॥४९॥
तयोर्निपततो राजन्नुपर्यासीद्धलायुधः ।
तं मागधः क्षणेनाधश्चकारामितविक्रमः ॥५०॥
तत उत्थाय तौ वीरौ क्रोधसंरक्तलोचनौ ।
भूयो जगृहतुर्घोरौ मत्तौ द्वाविव कुञ्जरौ ॥५१॥
तावुभौ परमक्रुद्धौ परस्परवधैषिणौ ।
उरसोरः समाहत्य भीमौ चकृषतू रणे ॥ ५२ ॥
एवं धनुःशतशतं तावाकृष्य परस्परम् ।
निकटस्थान्द्रुमाञ्शैलांश्चूर्णयामासतुर्नृप ॥५३॥
तं विसृज्य जरासन्धो गदामादाय दुर्मदः ।
उदतिष्ठदमेयात्मा रामोपि स महाबलः ।
क्षणादादत्त मुसलं प्रहर्तुमुपचक्रमे ॥ ५४ ॥
तं कामपालो मुसलेन मूर्ध्नि
जत्रुण्यंसे भुजयोर्नाभिदेशे ।
ऊरौ च जानौ जठरे च वक्ष-
स्यनेकशो वै प्रजहार युद्धे ॥ ५५ ॥
तं मागधो वक्षसि कन्धरे च
मुखे ललाटे चुबुके तथांसे ।
नाभौ नितंबे च तथैव पार्श्वे
समं स मानी प्रजहार रामम् ॥ ५६ ॥
एवं प्रहरतोस्तत्र राममागधयोर्मृधे ।
राजानो रणसंविग्ना बभूवुर्भृशपीडिताः ॥ ५७॥
क्रमेण ते विमनसो निवृत्तकदनोद्यमाः ।
आसन्नासन्ननिधनं मन्वाना मागधेश्वरम् ॥५८॥
सात्य महातेजाः सङ्गरे बाणमन्त्रिणा ।
युद्ध्यमानस्त्रिभिर्बाणैः कुंभाण्डेन समर्दितः॥५९॥
सोतिविद्धो महाबाहुः क्रुद्धः सर्प इव श्वसन् ।
आददे पञ्च नाराचान् कुंभाण्डं हन्तुमाहवे॥६०॥
ततो हाहारवो जज्ञे सेनायां दैत्यमन्त्रिणः ।
सात्यकिस्तं महाबाहुराकृष्याकर्णमाशुगैः ॥६१॥
विव्याध कुरुशार्दूल कुंभाण्डं बाणमन्त्रिणम् ।
नाभौ कण्ठे ललाटे च हृदि मूर्ध्न्यपि दानवम् ६२
अभिविद्धो रथोपस्थे निषसाद विचेतनः ।
तं विचेतनमालोक्य दुर्मनास्तस्य सारथिः ।
अपोवाह रणात्तूर्णं रथेन भरतर्षभ ॥ ६३ ॥
कूपकर्णस्तु दैतेयः प्रसक्तः कृतवर्मणा ।
गतं कुंभाण्डमालोक्य प्राप्तं च प्राणसंशयम् ।
विसृज्य कृतवर्माणमपायात्समराङ्गणात् ॥ ६४ ॥
तौ विसृज्य रणं दैत्यावनापृच्छय च भूपतिम् ।
अविसृष्टौ मागधेन हतशेषबलान्वितौ ।
दैत्यौ तेनैव मार्गेण जग्मतुः शोणितं पुरम्॥६५॥

विजयध्वजीयपाठे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥]

# [ विजयध्वजीयपाठे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

बलरामसुसलप्रहारपराजितस्य जरासन्धस्य स्वपुरगमनम् ॥ १ ॥ मागधं विजित्य प्रतिनिवर्तमानेन श्रीकृष्णेन मध्ये-मार्गं परशुरामदर्शनम् ॥ २ ॥ तदाज्ञया गोमन्तपर्वतं गच्छता श्रीकृष्णेन करवीरपुरे शृगालवासुदेववधः ॥ ३ ॥ ]

[ श्रीशुक उवाच—

बाणसेनां गतां दृष्ट्वा शस्त्रौघेण भृशार्दिताः ।
राजपुत्रा विमनसो बभूवुर्नृपसत्तम ॥ १ ॥
गतां च दानवीं सेनां श्रान्तांश्च धरणीपतीन् ।
दृष्ट्वा कृष्णं च युद्ध्यन्तं रामस्य ववृधे बलम् ॥२॥
स मागधं गृहीत्वाऽऽजौ मौलौ वामेन पाणिना ।
प्रहर्तुमैच्छच्छिरसि मुसलेन हलायुधः ॥ ३ ॥
ततोन्तरिक्षे घनघो रा
शुश्राव वाणीं विशदाशरीरिणीम् ।
न राम वध्यो भवता जरासुतः
सुखी निवर्तस्व रणादिति स्फुटम् ॥ ४ ॥
वचः समाकर्ण्य हलायुधो बली
विसृज्य चास्थाय रथं रणाङ्गणात् ।
न्यवर्तत ब्रह्मर्षिसिद्धसङ्घै-
रभिष्टुतो मागधसूतवन्दिभिः ॥ ५ ॥
जरासुतः संप्रति नम्रकन्धरो
नृपैश्च युद्धाभिजितैः समन्वितः ।
हतावशिष्टाल्पबलेन संवृतो
निवृत्तयुद्धः प्रययौ स्वकं पुरम् ॥ ६ ॥

श्रीशुक उवाच—

गोविन्दस्तु महातेजाः सपत्नाञ्छरसञ्चयैः ।
आच्छाद्य भूपान्विद्राव्य हत्वा च सुबहून्रणे ॥७॥
संस्तूयमानः संतुष्टैः सूतमागधवन्दिभिः ।
ब्राह्मणैश्च महाविद्यैः स्तोत्रं कुर्वद्भिरुच्चकैः ॥ ८ ॥
अन्वीयमानो भगवान्प्राविशन्मधुरां पुरीम् ।
हृष्टपुष्टजनाकीर्णां तुङ्गप्राकारतोरणाम् ॥ ९ ॥
चलत्कदलिकोपेतां दीपाङ्कुरविराजिताम् ।
प्रविशन्राजमार्गेण स्त्रीभिः प्रासादसंस्थितैः ॥१०॥
पुष्पैश्च लाजाञ्जलिभिः कीर्यमाणो व्यराजत ।
उपायनानि दिव्यानि पुष्पस्रगनुलेपनान् ॥ ११ ॥
प्रियंकरा माधवाभ्यामुपजह्रुः पुरौकसः ।
एवं स राजमार्गेण गत्वा यादवसत्तमः ॥ १२ ॥
सभां प्रविश्य विपुलामुपविश्य वरासने ।
रामेण सहितो वीरः शैनेयेन च धीमता ॥१३॥
पूजितो यदुभिर्विप्रैर्दिवि शक्र इवामरैः ।
तत्रासीनैर्बुद्धिमद्भिर्यदुवृद्धैर्महात्मभिः ॥ १४ ॥
उग्रसेनोद्धवमुखैरक्रूरप्रमुखैर्हरिः ।
समाभाष्याभ्यनुज्ञातः सङ्कर्षणसहायवान् ॥१५॥
द्रष्टुकामो महादुर्गं गोमन्तं पर्वतोत्तमम् ।
निर्गम्य मधुरां प्रातर्दक्षिणाभिमुखो ययौ ॥१६॥
स रामानुगतः श्रीमानुत्तीर्य यमुनां हरिः ।
देशान्बहूनतिक्रम्य पर्वतान्सरितो गिरौ ॥१७॥
गच्छन्कचिद्वनोद्देशे वृक्षमूलनिवासितम् ।
ददर्श कंचन मुनिं जटामण्डलमण्डितम् ॥ १८ ॥
चीरकृष्णाजिनधरं कमण्डलुविराजितम् ।
माधवौ समुपाविष्टं तेजसा भास्करोपमम् ॥१९॥
फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम् ।
दृष्ट्वा परमसंतुष्टौ रामकृष्णौ जगत्पती ॥ २० ॥
प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ ।
इदं चोवाच भगवान्कृष्णस्तं मुनिपुङ्गवम् ॥२१॥
नमस्ते भार्गव श्रीमञ्जामदग्न्य तपोधन ।
रामकृष्णौ स्मृतावावां कच्चित्ते श्रवणं गतौ ॥२२
इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः ।
निरीक्ष्य माधवौ प्राह प्रीत्युत्फुल्लमुखेक्षणः ॥२३॥
स्वागतं ते यदुश्रेष्ठ साग्रजाय महात्मने ।
जाने त्वां यदुषूत्पन्नं भगवन्तमधोक्षजम् ॥ २४ ॥
कार्याणां कारणं पूर्वं जगतामादिपूरुषम् ।
नमस्ते पुण्डरीकाक्ष विश्वलोकैककारण ॥ २५ ॥
किमर्थमिह संप्राप्तौ भवन्तौ विश्ववन्दितौ ।
जामदग्न्येन प्राहतू रामकेशवौ ॥ २६ ॥

गोमन्तं द्रष्टुमिच्छावो दुर्गहेतोरिह प्रभो ।
तदाकर्ण्याब्रवीद्रामो जामदग्न्यो जनार्दनम् ॥२७॥
एवमस्तु महाबाहो गोमन्तं गच्छ साग्रजः ।
करवीरपुरं नाम तन्मूले परिपालितम् ॥ २८ ॥
शृगालवासुदेवेन स युवां न सहिष्यति ।
तं हत्वा समरे शैलं गोमन्तं साध्ववाप्स्यथ ॥२९॥
इत्युक्तौ तेन रामेण जामदग्न्येन माधवौ ।
तमनुज्ञाप्य सर्वज्ञं जग्मतुर्दक्षिणामुखौ ॥ ३० ॥
तौ तथा यदुशार्दूलौ गच्छन्तौ दक्षिणापथम् ।
ददर्शतुश्च गोमन्तमभ्रंकषमहाद्रुमम् ॥ ३१ ॥
करवीरपुरं चैव तन्मूले तुङ्गतोरणम् ।
दृष्ट्वा विचित्रप्राकारहर्म्यप्रासादगोपुरम् ॥ ३२ ॥
शङ्खमाध्मापयामास शङ्खचक्रगदाधरः ।
तस्य शङ्खध्वनिं श्रुत्वा बभूव क्रोधविह्वलः ॥३३॥
शृगालो वासुदेवाख्यः प्रत्यगाद्यदुनन्दनौ ।
सोऽभ्येत्य बहुपादातितुरङ्गरथकुञ्जरः ॥ ३४ ॥
अभ्यवर्षच्छरौघेण छादयन्निव माधवौ ।
तदनीकमनाधृष्यं दृष्ट्वा यादवसत्तमौ ॥ ३५ ॥
योधयामासतुर्वीरौ द्वावेवाजौ पदातिनौ ।
सैन्यं च बाणपूगेन व्यथितं भृशविह्वलम् ॥३६॥
दृष्ट्वा शृगालभूपालस्तावधावदमर्षणः ।
तमायान्तमभिप्रेक्ष्य रथिनं धृतकार्मुकम् ।
न्यवारयद्वासुदेवो वेलेव वरुणालयम् ॥ ३७ ॥
तावुभौ परमक्रुद्धौ वासुदेवौ महाबलौ ।
युयुधाते तथाऽन्योन्यमन्योन्यवधकाङ्क्षिणौ ॥३८॥
स तथा विद्यमानस्य वासुदेवस्य सङ्गरे ।
शिरो जहार गोविन्दः क्षणेन मुकुटोज्ज्वलम् ३९
ततस्तत्सैनिकाः सर्वे हतशेषाः कुरूद्वह ।
कृष्णेन स्वामिनि हते दुद्रुवुः सर्वतो दिशम् ४०
ततस्तौ रामगोविन्दौ करवीरपुरं महत् ।
प्रविश्य पूजितौ विप्रैर्वणिग्भिश्च यथा प्रियः ४१
तद्गजाश्वरथानीककोशादिधनसञ्चयम् ।
मथुरां प्रेषयामास तदीयैर्भृत्यपूरुषैः ॥ ४२ ॥

विजयध्वजीयपाठे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ ]

---

## [ विजयध्वजीयपाठे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

रामकृष्णयोर्गोमन्तपर्वतारोहणं ॥ १ ॥ अत्रान्तरे महाबलिना श्वेतद्वीपं गत्वा भगवतः किरीटहरणं ॥ २ ॥ गरुडेन तंजित्वा किरीटमादाय गच्छता मार्गे गोमन्ते स्थितस्य श्रीकृष्णस्य शिरसि तत्किरीटस्थापनं ॥ ३ ॥ ततो रामकृष्णयोर्मधुरागमनं ॥ ४ ॥ पुनर्युद्धायागतस्य जरासन्धस्य पराजयः ॥ ५ ॥ ]

[श्रीशुक उवाच—
गोमन्तं पर्वतश्रेष्ठं तुङ्गद्रुमलतान्वितम् ।
सालतालतमालाढ्यं प्रियालाशोकशोभितम् ॥१॥
कदंबनिंबहिन्तालपूगपुन्नागशोभितम् ।
आरुह्य कदलीखण्डमण्डितं मत्तकोकिलम् ॥२॥
भ्रमद्भ्रमरसङ्घातप्लवङ्गाकंपितद्रुमम् ।
फलभारनतैः स्कन्धैर्नारिकेलैर्विराजितम् ॥ ३ ॥
बहुप्रस्रवणोपेतं सुच्छायं निर्मलोदकम् ।
रम्यं ददृशतुर्वीरौ प्रदेशं रामकेशवौ ॥ ४ ॥
तत्र प्रवर्षणं नाम शृङ्गं पर्वतमूर्धनि ।
अवापतुर्यत्र मेघा नित्यं वर्षन्त्यविक्लवाः ॥ ५ ॥
तत्रारुह्य यदुश्रेष्ठौ पश्यन्तौ हि दिशो दश ।
रममाणौ यथाकाममूषतुः पर्वतोत्तमे ॥ ६ ॥
एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे ।
निवासे देवदेवस्य शङ्खचक्रगदाभृतः ॥ ७ ॥
उपासीनो महाबाहुः श्रीमान्वैरोचनो बलिः ।
जहार देवदेवस्य किरीटं रत्नचित्रितम् ॥ ८ ॥
इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम् ।

पद्मरागमहानीलमुक्ताफलविराजितम् ॥ ९ ॥
पुष्परागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम् ।
हृतं दानववीरेण विदित्वा पुरपालकः ।
तमन्वधावत्त्वरितं वैनतेयो विहङ्गराट् ॥ १० ॥
तमन्तरे समासाद्य दानवेन्द्रं दुरासदम् ।
कृत्वा युद्धं महाघोरं जित्वा दानवपुङ्गवम् ॥११॥
गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम् ।
आगच्छन्ददृशे देवं देवकीनन्दनं हरिम् ॥ १२ ॥
वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोत्तमे ।
तस्य मूर्ध्नि निधायाशु किरीटं दिव्यभूषणम् ।
प्रणम्य पादयोर्मूर्ध्ना स्तोतुं समुपचक्रमे ॥ १३ ॥

गरुड उवाच—

नमोनमः कारणपूरुषाय
नारायणायाखिलवल्लभाय ।
सुरारिसंहारणकारणाय
नारायणायाखिलकर्मसाक्षिणे ॥ १४ ॥
हिरण्यगर्भत्वमुपेत्य मूले
सृजस्यशेषं भुवनं स एव ।
नारायणात्मन्परिपासि भूयो
जहार चान्ते भगवञ्शिवात्मन् ॥ १५ ॥
तं त्वा यदो ।शकर सुरश
जानेऽवतीर्णं भुवने वृषाकपिम् ।
अहं हि भृत्यस्तव वैनतेयो
ब्रूहि क्रियां किं करवाणि देव ॥ १६ ॥

श्रीशुक उवाच—

इत्युक्त्वा देवदेवेशं प्रणिपत्य विहङ्गराट् ।
जानुनी धरणीं कृत्वा तस्थौ प्राञ्जलिरग्रतः॥१७॥
तं दृष्ट्वा यादवश्रेष्ठो गरुडं पक्षिपुङ्गवम् ।
प्रीत्युत्फुल्लमुखो दोर्भ्यां पस्पर्शाङ्गं तदुत्तमम् १८
गच्छ भद्र यथाकाममेहि काले मया स्मृतः ।
इत्युक्त्वा तं विसृज्योभावीश्वरौ रामकेशवौ १९
फलमूलकृताहारौ पीतनिर्झरवारिणौ ।
अवरुह्य गिरेः शृङ्गात्करवीरपुरं गतौ ॥ २० ॥
तत्र तौ चतुरो मासानुषित्वा भरतर्षभ ।
महत्या सेनया सार्धं जग्मतुर्मधुरां पुरीम् ॥२१॥
शृगालं निहतं श्रुत्वा मागधः क्रोधविह्वलः ।
आजगाम कुरुश्रेष्ठ महत्या सेनया वृतः ॥ २२ ॥
तेन सार्धमभूद्युद्धं सप्ताहं रामकृष्णयोः ।
तदा पराजितो युद्धे मागधो बहुसैनिकः ॥२३॥
जगाम मगधानेव बहुभिः क्षत्रियैः सह ।
रामकृष्णौ च धर्मज्ञौ सूतमागधवन्दिभिः ।
स्तूयमानौ विविशतुः सानुगौ मधुरां पुरीम् २४]
एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ।
युयुधे मागधो राजा यदुभिः कृष्णपालितैः॥४२॥
[1]अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ।
हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥४३॥
[2]अष्टादशमसंग्राम आगामिनि तदन्तरा ।
नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥ ४४ ॥
रुरोध मधुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ।
नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वात्मसंमितान्[3] ४५
तं दृष्ट्वाऽचिन्तयत्कृष्णः सङ्कर्षणसहायवान् ।
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥४६॥
यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः[4] ।
[5]मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति॥
आवयोर्युध्यतोरस्य यद्यागन्ता[6] जरासुतः ।
बन्धून्वधिष्यत्यथवा[7] नेष्यते स्वपुरं बली ॥४८॥
तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ।
तत्र ज्ञातीन्समाधाय यवनं घातयामहे[8] ॥ ४९ ॥
इति संमन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ।
अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत्[9] ॥ ५० ॥
दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ।
रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम्॥५१॥
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ।
हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥५२

१ विज० अक्षिण्वत बलं सर्वं वृष्णिभिः । २ वीर० अथाष्टादशमे युद्धे । ३ विज० संमतान् । ४ विज० नद्यश्वो वा महाबलः । ५ विज० मागधोप्येति दुष्टात्मा परश्वो नैव संशयः । ६ विज० यद्यागच्छेज्जरासुतः । ७ वीर० न्हनिष्यत्यथ वा । ८ वीर० मारयामहे । ९ विज० कृष्णोद्भुतमचीक्लृपत् ।

राजतारकुटैः कोष्ठैर्हेमकुंभैरलङ्कृतैः ।
रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ ५३ ॥
वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ।
चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥ ५४ ॥
सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ।
यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ।
[यैस्त्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः]॥५५
श्यामैककर्णान्वरुणो हयाञ्छुक्लान्मनोजवान् ।
[ददौ सहस्रसङ्ख्यातान्देवदेवाय तोयराट् ।]
अष्टौ निधिपतिः कोशाँल्लोकपालो निजोदयान्॥५६
[तथान्ये लोकपालाश्च ददुः स्वाधिकृतं धनम् ।]
यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ।
सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ५७ ॥
तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः ।
प्रजापालेन रामेण कृष्णः समनुमन्त्रितः ।
निर्जगाम पुरद्वारात्पद्ममाली निरायुधः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

## एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ 54

श्रीकृष्णेन मुचुकुन्देन कालयवनघातनं ॥ १ ॥ मुचुकुन्दकृता श्रीकृष्णस्तुतिः ॥ २ ॥

**श्रीशुक उवाच—**
तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ।
दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥
नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ।
मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥
वासुदेवो ह्ययमिति पुमाञ्छ्रीवत्सलाञ्छनः ।
चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥
लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ।
निरायुधश्चलन्पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥
इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ।
अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥
हस्तप्राप्तमिवाऽऽत्मानं हरिणा स पदेपदे ।
नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥
पलायनं यदुकुले जातस्य तव नोचितम् ।
इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥
एवं क्षिप्तोऽपि भगवान्प्राविशद्गिरिकन्दरम् ।
सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥९॥
नन्वसौ दूरमानीय शेते मामिह साधुवत् ।
इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥१०॥
स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ।
दिशो विलोकयन्पार्श्वे तमद्राक्षीदवस्थितम् ॥११॥
स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत ।
देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात् ॥१२॥
**राजोवाच—**
को नाम स पुमान्ब्रह्मन्कस्य किंवीर्य एव च ।
कस्माद्गुहां गतः शिश्ये किंतेजो यवनार्दनः ॥१३
**श्रीशुक उवाच—**
स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् ।
मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥१४॥
स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे ।
असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥१५॥

---

१ विज० यदूनां च गृहैर्लसत् । २ उभ० विंयुज्यते । ३ विज० इदमर्धमधिकं । ४ वीर० चरन्पद्भ्यां ।

१ विज० इदमर्धमधिकं । २ विज० रत्नपूर्णानविक्षयान् । ३ विज० इदमर्धमधिकं । ४ वीर० प्रत्यागत्याथ रामेण । विज० मधुरायाश्च । ५ विज० त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥ ६ विज० गुहागतः । ७ वीर० किंतेजा यवनार्दनः । विज० किं तेजो यवनार्दनं ।

लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् ।
राजन्विरमतां कृच्छ्राद्भवान्नः परिपालनात् १६
नरलोके[1] परित्यज्य राज्यं निहतकण्टकम् ।
अस्मान्पालयतो वीर कामास्ते सर्व उज्झिताः१७
सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः ।
प्रजाश्च तुल्यकालीया[3] नाऽधुना सन्तिकालिताः१८
कालो बलीयान्बलिनां भगवानीश्वरोऽव्ययः ।
प्रजाः कालयते क्रीडन्पशुपालो यथा पशून् १९
वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥ २० ॥
एवमुक्तः स वै देवानभिवन्द्य महायशाः ।
[ अयाचत[5] गुहाविष्टो निद्रां तु बहुकालिकीम् ।
तथेत्युक्तस्तु तैर्देवैर्मुचुकुन्दो महामनाः ॥ १ ॥]
अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २१ ॥
स्वापं[6] यातं यस्तु मध्ये बोधयेत्त्वामचेतनः ।
स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥२२॥
यवने भस्मसान्नीते भगवान्सात्वतर्षभः ।
आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥२३॥
तमालोक्य घनश्यामं पीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥२४॥
चतुर्भुजं रोचमानं वैजयन्त्या च मालया ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २५ ॥
प्रेक्षणीयं नृलोकस्य[8] सानुरागस्मितेक्षणम् ।
अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥ २६ ॥
पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः[9] ।
शङ्कितः शनकै राजा दुर्धर्षमिव तेजसा ॥ २७ ॥

मुचुकुन्द उवाच—
को भवानिह संप्राप्तो विपिने गिरिगह्वरे ।
पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥२८॥
किंस्वित्तेजस्विनां तेजो भगवान्[1]वा विभावसुः ।
सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोपि वा २९
मन्ये त्वां देव देवानां त्रयाणां पुरुषर्षभम् ।
यद्बाधसे[2] गुहाध्वान्तं प्रदीपः प्रभया यथा ॥३०॥
शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव ।
स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते ३१
वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः ।
मुचुकुन्द इति प्रोक्तो[3] यौवनाश्वात्मजः प्रभो ३२
चिरं[4]प्रजागरश्रान्तो निद्रयाऽ[5]पहतेन्द्रियः ।
शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ३३
सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना ।
अनन्तरं भवाञ्छ्रीमाँल्लक्षितोऽमित्रशातनः[6] ॥ ३४
तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः ।
हतौजसो महाभाग माननीयोऽसि देहिनाम् ३५
एवं संभाषितो राज्ञा भगवान्भूतभावनः ।
प्रत्याह प्रहसन्वाण्या मेघनादगभीरया[7] ॥ ३६ ॥

श्रीभगवानुवाच—
जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः ।
न शक्यतेऽनुसङ्ख्यातुमनन्तत्वान्मयाऽ[8]पि हि ३७
क्वचिद्रजांसि[9] विममे पार्थिवान्युरुजन्मभिः । ब्रह्मैव
गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ३८
कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ।
नैवान्तं गच्छन्ति परमर्षयः ॥३९॥ २/४
तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम ।
विज्ञापितो विरिञ्चेन पुराऽहं धर्मगुप्तये ।
भूमेर्भारायमाणानामसुराणां क्षयाय च ॥ ४० ॥
अवतीर्णो यदुकुले गृह आनकदुन्दुभेः ।
वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ॥४१॥

---

१ उभ० नरलोकं । २ वीर० राज्यं च हृत । ३ विज० कालीना । ४ विज० मात्मनः । ५ विज० अयमेकः श्लोकोधिको दृश्यते । एतत्स्थाने औत्तराहमुद्रितपुस्तकेषु सार्धश्लोकं दृश्यते । तच्च–निद्रामेव ततो वव्रे स राजा श्रमकर्षितः । यः कश्चिन्मम निद्राया भङ्गं कुर्यात्सुरोत्तमाः । स हि भस्मीभवेदाशु तथोक्तश्च सुरैस्तदा । ६ विज० अयं श्लोको नास्ति । वीर० प्रतिबोधयति त्वां वै स्वपन्तं यस्त्वचेतनः । स त्वया दृष्टिमात्रेण । ७ वीर० भस्मतां । ८ उभ० त्रिलोकस्य । ९ विज० विस्मितः ।

१ उभ० भगवांस्त्वं । २ विज० यद्ध्राससे । ३ वीर० ख्यातो । ४ विज० चिरं । ५ उभ० निद्रयोपह । ६ उभ० शासनः । ७ विज० ह्राद । ८ विज० ममापि । ९ विज० कश्चिद्रजांसि ।

कालनेमिर्हतः कंसः प्रलंबाद्याश्च सद्द्विषः[1] ।
अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥४२॥
सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ।
प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः ॥४३॥
वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते ।
मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम्४४

श्रीशुक उवाच—

इत्युक्तस्तं प्रणम्याऽऽह मुचुकुन्दो मुदान्वितः ।
ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥४५॥

मुचुकुन्द उवाच—

विमोहितोऽयं जन ईशमायया
त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते
गृहेषु योषित्पुरुषश्च वञ्चितः ॥ ४६ ॥
लब्ध्वा जनो दुर्लभमत्र मानुषं
कथंचिदव्यङ्ग[2]मयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मति-
र्गृहान्धकूपे पतितो यथा पशुः ॥ ४७ ॥
ममैष कालोऽजित निष्फलो गतो
राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोश[3]भू-
ष्वासज्जमानस्य दुरन्तचिन्तया ॥ ४८ ॥
कलेबरेऽस्मिन्घटकुड्यसंनिभे
निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपै-
र्गां पर्यटंस्त्वागणयन्[4]सुदुर्मदः ॥ ४९ ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया
प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५० ॥
पुरा रथैर्हेमपरिष्कृतैश्चर-
न्मतङ्गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन[1] ते
कलेबरो विट्कृमिभस्मसंज्ञितः ॥ ५१ ॥
निर्जित्य दिक्चक्रमभूतविग्रहो
वरासनस्थः समराजवन्दितः ।
गृहेषु[2] मैथुन्यसुखेषु योषितां
क्रीडामृगः पूरुष ईश नीयते[3] ॥ ५२ ॥
करोति कर्माणि तपःसुनिष्ठितो
निवृत्तभोगस्तदपेक्षया ददत् ।
पुनश्च भूयेयमहं स्वराडिति[4]
प्रवृद्धतर्षो न सुखाय कल्पते ॥ ५३ ॥
भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिः ॥ ५४ ॥
मन्ये ममानुग्रह ईश ते कृतो
राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया
वनं विविक्षद्भिरखण्डभूमिपैः ॥ ५५ ॥
न कामयेऽन्यं तव पादसेवना-
दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्यो वरमात्मबन्धनम् ॥ ५६ ॥
तस्माद्विसृज्याऽऽशिष ईश सर्वतो[5]
रजस्तमःसत्त्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं
त्वा ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ ५७ ॥
चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै-[6]
रवितृषषडमित्रो[7] लब्धशान्तिः कथंचित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्म-
न्नभयमृतमशोकं पाहि मापन्नमीश ॥ ५८ ॥

१ वीर० विद्विषः। २ उभ० दप्यङ्ग। ३ विज० कोशेष्वासज्ज। ४ उभ० स्त्वामगणय्य दुर्मदः।

१ वीर० दुरत्ययेन चेत्कलेबरो । विज० दुरत्ययेन वै कलेबरो। २ विज० परेषु। ३ विज० गीयते। ४ वीर० भूयासमहं स्वराडिति। विज० भूयायमहीशराधसे। ५ विज० सर्वशो। ६ वीर० नोरुतापै। ७ वीर० अविदितषडमित्रो। विज० अवितृष उरुकृच्छ्रे।

**श्रीभगवानुवाच—**
सार्वभौम महाराज मतिस्ते विमलोर्जिता ।
वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥५९॥
प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत् ।
न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ६०
युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ।
अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम् ॥६१॥
विचरस्व महीं कामं मय्यावेशितमानसः ।
अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ६२
क्षात्रधर्मस्थितो जन्तून्न्यवधीर्मृगयादिभिः ।
समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥ ६३ ॥
जन्मन्यनन्तरे राजन्सर्वभूतसुहृत्तमः ।
भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥६४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ 55

श्रीकृष्णरामयोर्गोमन्तपर्वतगमनं ॥ १ ॥ तौ हन्तुं जरासन्धेन प्रदीपितात्पर्वतात् उत्प्लुत्य तयोर्द्वारकागमनं ॥ २ ॥ [ विजयध्वजीयपाठे पाण्डवदर्शनार्थं श्रीकृष्णेन कृतवर्मप्रेषणं । रेवतेन स्वपुत्र्या रेवत्याः वरं प्रष्टुं ब्रह्मसभागमनं । ब्रह्मचोदितेन रेवतेन रेवत्याः बलरामाय प्रदानं ॥ ] भीष्मकराजकथा ॥ ३ ॥ रुक्मिण्या श्रीकृष्णाय पत्रिकाप्रेषणं ॥ ४ ॥

**श्रीशुक उवाच—**
इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः ।
तं परिक्रम्य संनम्य निश्चक्राम गुहामुखात् ॥१॥
स वीक्ष्य क्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ।
मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥
तपःश्रद्धायुतो धीरो निःसङ्गो मुक्तसंशयः ।
समाधाय मनः कृष्णे प्राविशद्गन्धमादनम् ॥३॥
बदर्याश्रममासाद्य नरनारायणालयम्[2] ।
सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥ ४ ॥
भगवान्पुनराव्रज्य यवनवेष्टिताम्[3] ।
हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥५॥
नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ।
आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥
[ [4]ततो राजा जरासन्धः कालान्तानलसंनिभः ।
विधाय मकरव्यूहं रथनागाश्वपत्तिमत् ॥ १ ॥
अन्तश्चकार गोविन्दं व्यूहस्य निमिषान्तरे ।
ततो विलोक्य गोविन्दो वृक्षमुत्पाट्य रंहसा ।
गजान्रथान्हयान्युद्धे पोथयामास दुर्मदः ॥ २ ॥
कृष्णेन हन्यमानास्ते वृक्षेण रिपुकुञ्जराः ।
पेतुर्गतासवो भूमौ वज्रनुन्ना इवाद्रयः ॥ ३ ॥
रथाश्च रथिभिर्युक्ताः सतुरङ्गाः सचोदकाः ।
निष्पिष्टा इव न क्वापि दृश्यन्ते कुरुसत्तम ॥ ४ ॥
रामस्तु मुष्टिना चाजौ कुञ्जरान्मदशालिनः ।
जघान कुपितः शैलान्वज्रेणेव सुरेश्वरः ॥ ५ ॥
राममुष्टिप्रहारेण विकीर्णस्यन्दना नृप ।
न व्यदृश्यन्त भूपृष्ठे चूर्णिताः शीर्णपर्णवत् ॥६॥
यवनस्य धनं विश्वं गच्छन्तं द्वारकामनु ।
निहत्य यादवान्विश्वांस्तद्गृहीत्वा जरासुतः ।
अभ्यवर्तत सङ्ग्रामे रामकृष्णौ कुरूद्वह ॥ ७ ॥]
विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ।
[[3]तं चापतन्तमालोक्य सहितं सबलैर्नृपैः ।
कीर्यमाणौ शरौघेण वृष्ट्येव कीरपोतकौ
विरथौ विप्रहरणौ विवर्माणौ विसैनिकौ ॥ १ ॥
मनुष्यचेष्टामापन्नौ राजन्दुद्रुवतुर्द्रुतम् ॥ ७ ॥

१ विज० ज्ञानिनामेकभक्तानां । २ विज० नारायणाश्रमं । ३ वीर० मधुरां यवनावृतां । विज० मधुरां यवनाहतां । ४ विज० एते सप्तश्लोका अधिकाः ।

१ वीर० क्षत्रधर्मे । विज० क्षत्रधर्मं । २ विज० मामुपा । ३ विज० चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ४ विज० अयं सार्धश्लोकोऽधिकः ।

विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् ।
पद्भ्यां पद्मपलाशाभ्यां चेरतुर्बहुयोजनम् ॥ ८ ॥
पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली ।
अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥ ९ ॥
प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम् ।
प्रवर्षणाख्यं भगवान्नित्यदा यत्र वर्षति ॥ १० ॥
गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ।
ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ॥ ११
[प्रहृत्य वीरौ विश्रान्तौ करवीरपुरे निशि ।
तावारुरुहतुर्वीरौ गोमन्तमुदिते रवौ ॥ १ ॥
सिद्धचारणगन्धर्वविद्याधरनिषेवितम् ।
आरुह्य शैलं गोमन्तं रामकृष्णौ त्वरान्वितौ ॥२॥
प्रवर्षणाख्यं तच्छृङ्गं यत्राब्दा नित्यवर्षिणः ।
तत्र तावासतू राजन् फलमूलाशनौ सुखम् ॥३॥
जरासन्धस्तु दुष्टात्मा तावनुद्रुत्य माधवौ ।
रुरोध शैलं गोमन्तं महत्या सेनया वृतः ॥ ४ ॥
स भूपालान्समाहूय स्वानुगान्युद्धदुर्मदान् ।
कलिङ्गं कुञ्जरपतिं सुराष्ट्राधिपतिं तथा ॥ ५ ॥
जयद्रथं सिन्धुपतिं सोमदत्तं च कौरवम् ।
गान्धारराजं शकुनिं वैदर्भं रुक्मिमेव च ॥ ६ ॥
सुदक्षिणं च कांभोजं विराटं मत्स्यभूपतिम् ।
एतानाज्ञापयामास पूर्वस्यां दिशि भूपतीन् ॥ ७
पाञ्चालराजं द्रुपदं दमघोषं च चेदिपम् ।
ब्रह्मदत्तं च साल्वेशमेकलव्यं निषादपम् ॥ ८ ॥
बाह्लीकं च कुरुश्रेष्ठं युधामन्युं च दुर्जयम् ।
विन्दानुविन्दावावन्त्यौ काशिराजं च पौण्ड्रकं ९
आज्ञापयामास नृपानेतान्वीरो जरासुतः ।
गिरिं गोमन्तमारोढुं दक्षिणस्यां दिशि प्रभो॥१०
द्रुमं किंपुरुषाधीशं दन्तवक्त्रं सहानुजम् ।
वीरं विदेहराजानं भूरिश्रवसमेव च ॥ ११ ॥
करूशेशं बृहच्चापं दाशार्णं च शतध्वजम् ।
रराजानं दरदं च महारथम् ॥ १२॥

एतान्महीपतीन्राजा जरासन्धोऽमितद्युतिः ।
प्राह गोमन्तमारोढुं पश्चिमस्यां दिशि द्रुतम्॥१३
त्रिगर्तं च सुशर्माणं बलिनं वेणुदारिणम् ।
कुलिन्दं च महासत्वं केकयानपि भूपतीन् ॥१४॥
शिशुपालं च भूपालं भीष्मकं चापि दुर्जयम् ।
पुरस्कृत्यारुरोहाशु कौबेर्यां मागधो दिशि ॥१५॥
एवं गोमन्तमारुह्य सर्वर्तुफलपादपम् ।
विचित्य तत्र सर्वत्राप्यधःशृङ्गात्प्रवर्षणात् ।
चिच्छिदुः सकलान्वृक्षान्नापश्यन्राममाधवौ १६]
तत उत्पत्य तरसा दह्यमानतटादुभौ ।
दशैकयोजनोत्तुङ्गान्निपेततुरधोभुवि ॥ १२ ॥
अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ।
स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥ १३ ॥
सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ।
बलमाकृष्य सुमहन्मगधान्मागधो ययौ ॥ १४॥
[अष्टादशे तु सङ्ग्रामे जित्वा यादवसत्तमौ ।
दृप्तः स्वराष्ट्रे न्यवसज्जितदिङ्मण्डलो नृप ।
माधवौ तु महात्मानौ प्रविश्य द्वारकां पुरीम् ॥१
स्तूयमानौ दिवारात्रं सूतमागधवन्दिभिः ।
वृतावानन्दबहुलैर्बन्धुभिः सुखमूषतुः ॥ २ ॥
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

अध्याय: 56

श्रीशुक उवाच—
कदाचिद्देवकीपुत्रो रामशैनेयसंयुतः ।
सेव्यमानः सभायां वै नानादेशेश्वरैर्नृपैः ॥ १ ॥
पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतैर्मृधे ।
बद्धं शुश्राव कौरव्य ब्राह्मणैः सत्रयाजिभिः ॥२॥
तच्छ्रुत्वा हृष्टहृदयः कृतवर्माणमच्युतः ।
नगरं हास्तिनपुरं प्रेषयामास वेदितुम् ॥ ३ ॥
स गत्वा हास्तिनपुरं वृद्धं कुरुपितामहम् ।
ददर्श द्रोणविदुरधृतराष्ट्रकृपैर्वृतम् ॥ ४ ॥
युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम् ।
सभाजयामास भृशं कुन्तीं च हृदिकात्मजः॥५॥

१ विज० एतदादौ द्वौ श्लोकौ न स्तः । २ विज० एते षोडशश्लोका अधिकाः ।

१ उभ० उत्प्लुत्य । २ विज० मानात्तु तावुभौ । ३ विज० स्वपुरीं । ४ विज० कुण्डलिताः श्लोका अधिकाः ।

युधिष्ठिरोपि पप्रच्छ सानुगं कंसमर्दनम् ।
हतं च कालयवनं जरासन्धं च निर्जितम् ॥६॥
वासुदेवं च निहतं करवीरपुरेश्वरम् ।
द्वारवत्याश्च करणं नगर्या वरुणालये ॥ ७ ॥
हतौ च हंसडिबिकौ ब्रह्मदत्तं च दुर्जयम् ।
श्रुत्वा हार्दिक्यवचनाद्यथार्थेन युधिष्ठिरः ॥ ८ ॥
मेने त्रैलोक्यसाम्राज्यं स्वहस्तगतमक्षयम् ।
सभाजितश्च हार्दिक्यः सुखसंभाषणादिभिः ॥९॥
पाण्डुपुत्रैस्तथा कुन्त्या सौहार्दस्रुतबाष्पया ।
हार्दिक्यस्तानतुज्ञाप्य बान्धवान्पृथया सह ॥१०॥
मातृष्वसेयान्धर्मज्ञानभिवाद्य यथावयः ।
गाङ्गेयेनाभ्यनुज्ञातो धृतराष्ट्रेण चानघ ॥ ११ ॥
विदुरेणाङ्गराजेन द्रोणेन च कृपेण च ।
प्राज्ञेनाचार्यपुत्रेण तथा दुर्योधनेन च ॥ १२ ॥
कृतवर्माऽभ्यनुज्ञातो निर्गत्य गजसाह्वयात् ।
द्वारकां वृष्णिनिलयामाजगाम दिनात्यये ॥१३॥
स प्रविश्य सभां दिव्यामनेकनृपसेविताम् ।
दृष्ट्वा गोविन्दमासीनं काञ्चने परमासने ॥१४॥
वीजच्चामरसङ्घातसहितं वनमालिनम् ।
आचचष्टेऽखिलं तस्य यथादृष्टं यथाश्रुतम् ॥१५॥
वृत्तान्तं कौरवेयाणां नगरे गजसाह्वये ।
तदाकर्ण्य हरिः सर्वं वृत्तान्तं जगदीश्वरः ॥१६॥
पौरुषं पाण्डुपुत्राणां बभूवानन्दनिर्भरः ॥ १७ ॥
षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥] अध्याय: 57
आनर्ताधिपतिः श्रीमान्रैवतो रेवतीं सुताम् ।
ब्रह्मणा चोदितः प्रादाद्धलायेति पुरोदितम् ॥१५॥
[राजोवाच—
रेवतो नाम राजासौ ब्रह्मणा चोदितः कथम् ।
तदहं श्रोतुमिच्छामि विस्तरेण महामुने ॥ १ ॥
श्रीशुक उवाच—
रेवतो नाम राजाऽऽसीत्पुरा धर्मार्थतत्त्ववित् ।
रेवती नाम तस्यैका जज्ञे कन्या यशस्विनी ॥२॥
स ब्रह्माणं ययौ प्रष्टुं कस्मै दास्यामि तामिति
अदत्ता याच्यमानोऽपि नानाजनपदेश्वरैः ॥ ३ ॥
सभायां ब्रह्मणस्तत्र गन्धर्वौ द्वौ हाहाहुहू ।
तस्मिन्नगायतां काले ग्राममूर्च्छाविचक्षणौ ॥ ४ ॥
राजाऽतिष्ठद्बहिः किंचित्तद्विरामप्रतीक्षया ।
गीतावसाने पप्रच्छ प्रणिपत्य पितामहम् ॥ ५ ॥
एषा मे भगवन्कन्या कस्मै दास्य इमामिति ।
तं प्राह पद्मभूः कस्ते राजपुत्रो विरोचते ॥ ६ ॥
तत्रान्यांश्च महीपालानाचक्ष्वेति कुरूद्वह ।
ततस्तान्रैवतः प्राह भूपालान्विषयेश्वरान् ॥ ७ ॥
स तानाकर्ण्य नृपतीन्प्रहस्योवाच रेवतम् ।
युगानि तु बहून्यत्र गतानि तव भूपते ॥ ८ ॥
क्षणमात्रमिवाश्राव्यं शृण्वतो गीतमेतयोः ।
केदानीं तव ते भूपाः सुतायाः सदृशा वराः ॥९॥
इदानीं राजशार्दूल यदुवंशविवर्धनौ ।
वसुदेवगृहे जातौ रामकृष्णाह्वयौ प्रभू ॥ १० ॥
तत्र सङ्कर्षणायेमां कन्यां यच्छस्व भूपते
इत्युक्तस्तेन भूपालस्तं प्रणम्य पुरं गतः ।
रामाय प्रददौ कन्यां रूपिणीं बाहुशालिने ११
तामादियुगसंभूतां दीर्घदेहां महाभुजः ।
आकृष्य लाङ्गलेनांसे समां चक्रे हलायुधः ॥१२]
भगवानपि गोविन्द उपयेमे कुरूद्वह ।
वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे ॥१६॥
प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान्
पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥१७॥
राजोवाच—
भगवान्भीष्मकसुतां रुक्मिणीं रुचिराननाम् ।
राक्षसेन विधानेन उपयेम इति श्रुतम् ॥ १८ ॥
भगवञ्छ्रोतुमिच्छामि कृष्णस्यामिततेजसः ।
यथा मागधशाल्वादीन् जित्वा कन्यामुपाहरत् १९
ब्रह्मन्कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः ।
को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥२०

१ विज० कुण्डलिताः श्लोका अधिकाः ।

१ विज० इन्दिरांशां । २ विज० भूतानां । ३ उभ० विवाहेन । ४ वीर० जित्वैकः पुनरागमत् । विज० जित्वा तत्पारमागमत् । ५ विज० विष्णु ।

श्रीशुक उवाच—
राजाऽऽसीद्भीष्मको नाम विदर्भाधिपतिर्महान्।
तस्य पञ्चाभवन्पुत्राः कन्यैका च वरानना ॥२१
रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः।
रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती २२
सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः।
गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥ २३ ॥
तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम्।
कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥२४॥
बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप।
ततो निवार्य कृष्णद्विड् रुक्मी चैद्यममन्यत ॥२५
तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम्।
विचिन्त्याप्तं द्विजं कंचित्कृष्णाय प्राहिणोद्द्रुतम्२६
द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः।
अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ २७ ॥
दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात्।
उपवेश्यार्हयाञ्चक्रे यथाऽऽत्मानं दिवौकसः॥२८॥
तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः।
पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत ॥ २९ ॥
कच्चिद्द्विजवरश्रेष्ठ धर्मस्ते वृद्धसंमतः।
वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥ ३० ॥
संतुष्टो यर्हि वर्तेत ब्राह्मणो येन केन चित्।
अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ३१
असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः।
अकिंचनोऽपि संतुष्टः शेते सर्वाङ्गविज्वरः ॥३२॥
विप्रान्स्वलाभसंतुष्टान्साधून्भूतसुहृत्तमान्।
निरहंकारिणः शान्तान्नमस्ये शिरसाऽसकृत् ॥३३
कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः।
सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः॥३४
यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया।
सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते ॥३५॥

एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना।
लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥ ३६ ॥
[रुक्मिण्या प्रेषितस्तेऽहं सकाशं पुरुषोत्तम।
तस्याः सन्देशमाकर्ण्य क्रियतां तदनन्तरम् ॥१॥
निधाय लिखितं पत्रं पादयोः प्रणनाम तम्।
तदादाय जगन्नाथः स्मितसुन्दरलोचनः।
वाचयामास धर्मात्मा सादरं स्पृहयन्निव ॥ २॥]

रुक्मिण्युवाच—
श्रुत्वा गुणान्भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम्।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताऽऽविशति चित्तमपत्रपं मे ॥ ३७ ॥
का त्वा मुकुन्द महती कुलशीलरूप-
विद्यावयोद्रविणधामभिरात्मतुल्यम्।
धीरा पतिं कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोभिरामम् ॥ ३८ ॥
[स त्वं मयाप्यभिवृतः पतिरिन्दिराया
भक्तप्रियः कृपणलोकशरण्य ईशः।
मत्वैतदङ्ग तव पादसरोजदास्याः
कामं कुरु प्रियतम प्रणतास्मि तेऽङ्घ्रिम् ॥ १ ॥]
तन्मे भवान्खलु वृतः पतिरङ्ग जाया-
मात्मार्पितश्च भवतोऽत्र विभो विधेहि।
मा वीरभागमभिमर्शतु चैद्य आरा-
द्गोमायुवन्मृगपतेर्बलिमंबुजाक्ष ॥ ३९ ॥
पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान्परेशः।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥ ४० ॥
श्वोभाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः।

१ वीर० सा पश्यन्ती। २ विज० रुक्मी निवार्य कृष्णद्विट् चैद्याय समकल्पयत्। ३ विज० असन्तुष्टः सुखं विप्र नाप्नोत्यपि। ४ विज० यदृच्छया। ५ उभ० सर्वं मे। ६ वीर० हे।

१ विज० इदमर्धं नास्ति। २ वीर० कुण्डलितः पाठोऽधिको दृश्यते। ३ विज० एतदादिसार्धः श्लोकोऽधिको दृश्यते। ४ विज० सङ्गमांस्ते। ५ विज० विवरं। ६ विज० रूपं परं भुवनमङ्गल मङ्गलं ते। ७ विज० व्रीडावती। ८ विज० अयमेकः श्लोकोधिकः। ९ विज० गुप्तान्समेत्य। १० विज० समेतैः।

निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ ४१ ॥
अन्तःपुरान्तरचरीमनिहत्य बन्धूं-
स्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ४२ ॥
[तत्रैत्य मां रथपदातिगजाश्वयुक्तः
संमथ्य शाल्वमगधान्सहचेदिभूपान् ।
आदाय मां सहचरीभिरथो रमेशो
गृह्णातु पाणिमुपनीय पुरीं स्वकीयाम् ॥ १ ॥ ]
यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून्व्रतकृशाञ्छतजन्मभिः स्यात् ॥ ४३ ॥
[श्रीशुक उवाच—
इति पत्रगतं विश्वं विमृश्य मधुसूदनः ।
संदेशं राजकन्यायाः तं ब्राह्मणमवैक्षत ॥ १ ॥
ब्राह्मण उवाच—
इत्येते गुह्यसंदेशा यदुदेव मया हृताः ।
विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥४४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशत्तमोऽध्यायः ॥ ~~५३~~ ॥ 58

श्रीकृष्णस्य विदर्भनगरगमनं ॥ १ ॥ रुक्मिणीहरणं ॥ २ ॥

**श्रीशुक उवाच—**
वैदर्भ्याः स तु संदेशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥ १ ॥
**श्रीभगवानुवाच—**
[यथा सा रुक्मिणी नित्यं मच्चित्ताऽऽस्ते सुशोभना।]
तथाऽहमपि तच्चित्तो निद्रां च न लभे निशि ।
वेदाऽहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः॥२॥
तामानयिष्य उन्मथ्य राजन्यापशदान्मृधे ।
मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ॥ ३ ॥
**श्रीशुक उवाच—**
उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ।
रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥४॥
स चाश्वैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ ५ ॥
आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ।
आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥
राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः ।
शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत् ।
पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ।
चित्रध्वजपताकाभिस्तोरणैः समलङ्कृतम् ॥ ८ ॥
स्रग्गन्धमाल्याभरणैर्विरजोंबरभूषितैः ।
जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ ९ ॥
पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप ।
भोजयित्वा यथान्यायं वाचयामास मङ्गलम् १
सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ।
अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥ ११ ।

१ विज० चराम विहत्य । २ वीर० कुलदेव । ३ वीर० मुपेयां । ४ विज० अयमेकः श्लोकोधिकः । ५ वीर० पाणौ । ६ उभ० प्रहसन्द्विज । ७ वीर० इदमर्धमधिकं । ८ विज० नाध्यगमं निशि । ९ विज० मेधसोमेः । १० वीर० सैन्य ।

१ विज० निहत्यै । २ उभ० यर्ह्यंबुजाक्ष । ३ विज कृशा शतजन्मभिः स्यां । ४ विज० अयं श्लोकोधिकः ५ वीर० कृत्यं । विज० युक्तं । ६ विज० सप्तपञ्चाशत्तमोऽध्यायः । ७ विज० कार्याण्य । ८ विज० विरजांबरभूषणैः ९ विज० सुस्नाता सुदती कन्या कृतकौतुकमङ्गला । अहतांशुकयुग्मेन भूषिता भूषणोत्तमैः ।

चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः।
पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये॥ १२॥
हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान्।
प्रादाद्धेनूंश्च विप्रेभ्यो राजा विधिविदां वरः १३
एवं चेदिपती राजा दमघोषः सुताय वै।
कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम्॥१४॥
मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः।
पत्त्यश्वसंकुलैः सैन्यैः परीतः कुण्डिनं ययौ १५
तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च।
निवेशयामास मुदा कल्पितान्यनिवेशने॥ १६॥
तत्र शाल्वो जरासन्धो दन्तवक्रो विदूरथः।
आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः॥१७॥
कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम्।
यद्यागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः॥ १८॥
योत्स्यामः संहतास्तेन इति निश्चितमानसाः।
आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः॥ १९॥
श्रुत्वैतद्भगवान्रामो विपक्षीयनृपोद्यमम्।
कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः॥२०॥
बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः।
त्वरितः कुण्डिनं प्रागाद्गजाश्वरथपत्तिभिः॥२१॥
भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः।
प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा॥२२॥
अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः।
नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम्।
सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः २३
अपि मय्यनवद्यात्मा दृष्ट्वा किंचिज्जुगुप्सितम्।
मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः॥२४॥
दुर्भगाया न मे धाता नानुकूलो महेश्वरः।
देवी वा विमुखा गौरी रुद्राणी गिरिजा सती२५
एवं चिन्तयती बाला गोविन्दहृतमानसा।
न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले॥ २६॥
एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप।
वाम ऊरुर्भुजो नेत्रमस्फुरन्प्रियभाषिणः॥ २७॥

१ विज० सहिताः सर्वे। २ वीर० बलवान्रामो। ३ वीर० विमुखी। ४ विज० उभ० अश्रु। ५ वीर० शंसिनः।

अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः।
अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह॥ २८॥
सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती।
आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता २९
तस्या आवेदयत्प्राप्तं शशंस यदुनंदनम्।
उक्तं च सत्यवचनमात्मोपनयनं प्रति॥ ३०॥
तमागतं समाज्ञाय वैदर्भी हृष्टमानसा।
न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा॥३१॥
प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ।
अभ्ययात्तूर्यघोषेण रामकृष्णौ :॥ ३२॥
मधुपर्कमुपानीय वासांसि विरजांसि सः।
उपायनान्यभीष्टानि विधिवत्समपूजयत्॥ ३३॥
तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः।
[बाह्योद्याने कुण्डिनस्य यथायोगं सुविस्तृतम्।
आवेद्य पूर्णं नगरं जरासन्धादिभिर्नृपैः॥]
ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा॥३४॥
एवं राज्ञां समेतानां यथावीर्यं यथावयः।
यथाबलं यथावित्तं सर्वैः कामैः समर्हयत्॥३५॥
कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः।
आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम्॥३६॥
अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा।
असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः३७
किंचित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत्।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः॥३८॥
एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः।
कन्या चान्तःपुरात्प्रागाद्भटैर्गुप्ताम्बिकालयम्॥३९
पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम्।
[परिवारैः कतिपयैर्युक्तो यादवनन्दनः।]
सा चानुध्यायती सम्यङ्मुकुन्दचरणांबुजम्॥४०॥
यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता।

१ विज० पुरचरां। २ विज० तमपृच्छ। ३ विज० आवेदयामास तस्यै। ४ वीर० सरामं यदुनन्दनं। विज० संप्राप्तं यदुनन्दनं। ५ उभ० रुचिराणि सः। ६ विज० अयं श्लोकोधिकः। ७ वीर० यथावृत्तं। ८ वीर० पङ्कजं। ९ विज० इदमर्धमधिकं।

गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ।
[वेत्रझर्झरहस्तैश्च वृद्धैः कञ्चुकिभिस्तथा ।]
मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ॥ ४१ ॥
नानोपहारबलिभिर्वारमुख्याः सहस्रशः ।
स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलङ्कृताः ॥ ४२ ॥
गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ।
परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥ ४३ ॥
आसाद्य देवीसदनं धौतपादकरांबुजा ।
उपस्पृश्य शुचिः शान्ता प्रविवेशांविकान्तिकं ४४
तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ।
भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥४५॥
नमस्ये त्वांबिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान्कृष्णस्तदनुमोदताम् ॥४६॥
[इति संप्रार्थयन्ती सा देवीं देवमुमां शिवाम् ।
पूजयामास विधिवद्द्विजपत्नीपुरस्कृता ॥ १ ॥]
अद्भिर्गन्धाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः ।
नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥४७॥
विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ।
लवणापूपतांबूलकण्ठसूत्रफलेक्षुभिः ॥ ४८ ॥
तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ।
ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥४९॥
मुनिव्रतमथ त्यक्त्वा निश्चक्रामांविकागृहात् ।
[उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम् ।
तौ विदर्भप्रसूतानां नृपाणां कुलदेवते ॥ १ ॥
तदन्तिकमुपागम्य शचीं सुरपतिप्रियाम् ।
चिराराधितपादाब्जां सा प्रणम्य विनिर्ययौ ॥२॥]
प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥५०॥
[धूर्तानेकातपत्राढ्यां वीजच्चामरसंकुलाम् ।]

तां देवमायामिव वीरमोहिनीं
सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितंबार्पितरत्नमेखलां
व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ५१ ॥
शुचिस्मितां बिंबफलाधरद्युति-
शोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चलन्तीं कलहंसगामिनीं
शिञ्जत्कलानूपुरधामशोभिना ॥ ५२ ॥
विलोक्य वीरा मुमुहुः समागता
यशस्विनस्तत्कृतहृच्छयार्दिताः ।
यां वीक्ष्य ते नृपतयस्तदुदारहास-
व्रीडावलोकहृतचेतस उज्झितास्त्राः ॥ ५३ ॥
पेतुः क्षितौ गजरथाश्वगता विमूढा
यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ।
सैवं शनैश्चलयती चलपद्मकोशौ
प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥ ५४ ॥
उत्सार्य वामकरजैरलकानपाङ्गैः
प्राप्तान् ह्रियैक्षत नृपान्ददृशेऽच्युतं सा ।
तां राजकन्यां रथमारुरुक्षतीं
जहार कृष्णो द्विषतां समीक्षताम् ॥ ५५ ॥
रथं समारोप्य
राजन्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः
सृगालमध्यादिव भागहृद्धरिः ॥ ५६ ॥
तं मानिनः स्वाभिभवं यशःक्षयं
परे जरासन्धवशा न सेहिरे ।
अहो धिगस्मान्यश आत्तधन्वनां
गोपैर्हृतं केसरिणां मृगैरिव ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

१ विज० इदमर्धमधिकं । २ उभ० देवसदनं । ३ वीर० एकः श्लोकोऽधिको दृश्यते । ४ विज० वस्त्रस्रङ्माल्यभूषणैः । ५ विज० शेषाः । ६ विज० शेषाश्च । ७ वीर० मौनव्रत । ८ विज० इमौ श्लोकावधिकौ । ९ विज० धात्रीं । १० उभ० शोभितां । ११ विज० इदमर्धमधिकं ।

१ वीर० शुभिः । २ त्कलं नूपुरपादशोभितां । ३ वीर० च्युतं च । ४ विज० नागहृद्धरिः । ५ विज० अत्राऽध्याय-समाप्तिः । ६ विज० अयं श्लोकः उत्तराध्यायारंभे वर्तते । ७ वीर० मुखा । ८ विज० अष्टपञ्चाशत्तमोऽध्यायः ।

# चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ 59

युद्धार्थमागतानां रुक्मिपक्षीयानां राज्ञां श्रीकृष्णेन पराजयपूर्वकं रुक्मिणो विरूपकरणं ॥ १ ॥ द्वारकायां रुक्मिणीविवाहमहोत्सवः ॥ २ ॥

श्रीशुक उवाच—

इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ।
ः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥१
तानापतत आलोक्य यादवानीकयूथपाः ।
तस्थुस्तत्संमुखा राजन्विस्फूर्ज्य स्वधनूंषि ते ॥२॥
अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः ।
मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ३ ॥
पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ।
सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥ ४ ॥
प्रहस्य भगवानाह मास्मभैर्वामलोचने
विनङ्क्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥ ५ ॥
तेषां तद्विक्रमं वीरा गदसङ्कर्षणादयः ।
अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान् ॥ ६ ॥
पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ।
सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ७
हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ।
अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ८ ॥
हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः ।
राजानो विमुखा जग्मुर्जरासन्धपुरःसराः ॥ ९ ॥
शिशुपालं समभ्येत्य हृतदारमिवाऽऽतुरम् ।
नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥ १० ॥
भोभोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज ।
न प्रियाप्रिययो राजन्निष्ठा देहिषु दृश्यते ॥११॥
यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ।
एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १२ ॥
शौरेः सप्तदशाहं वै संयुगानि पराजितः ।
त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥१३॥
तथाऽप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ।
कालेन दैवयुक्तेन जानन्विद्रावितं जगत् ॥१४॥
अधुनाऽपि वयं सर्वे वीरयूथपयूथपाः ।
पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः॥१५॥
रिपवो जिग्युरधुना काल आत्मानुसारिणि ।
तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः १६
एवं प्रबोधितो मित्रैश्चैद्योऽगात्सानुगः पुरम् ।
हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः॥१७॥
रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः ।
पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्या वृतो बली ॥१८॥
रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ।
प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥ १९ ॥
अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ।
कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः॥२०॥
इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ।
चोदयाश्वान्यतः कृष्णस्तस्य मे संयुगं भवेत् २१
अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ।
नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥२२॥
विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ।
रथेनैकेन गोविन्दं तिष्ठतिष्ठेत्यथाह्वयत् ॥ २३ ॥
[स गत्वा नर्मदां देवीं तरन्तं मधुसूदनम् ।
आसाद्य युद्धसंनद्धस्तिष्ठतिष्ठेति चाब्रवीत् ॥१॥]
धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ।
आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥ २४ ॥
कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः ।
हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥२५
यावन्न मे हतो बाणैः शयीथा मुञ्च दारिकाम् ।
[धनुर्विकृष्य सशरं जघ्ने कृष्णं त्रिभिः शरैः ।]

१ विज० तस्थुर्वै संमुखा । २ वीर० विष्फार्य । ३ विज० भाव । ४ विज० मामैस्त्वं । ५ उभ० समेत्याथ ।

१ विज० दैवयोगेन । २ वीर० स्तेन मे संयुगो । ३ विज० अन्वधावत रंहसा । ४ विज० एकः श्लोकोधिकः । ५ वीर० आह चोर क्षणं । विज० आहचारे क्षणं । ६ विज० इदमर्धमधिकं ।

सयन्कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम्॥
अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः ।
स चान्यद्धनुरादाय कृष्णं विव्याध पञ्चभिः २७
तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ।
पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥ २८ ॥
परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ।
यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः ॥२९॥
ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ।
कृष्णमभ्यद्रवत्क्रुद्धः पतङ्ग इव पावकम् ॥ ३०॥
तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ।
छित्त्वासिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः॥३१
दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ।
पतित्वा पादयोर्भर्तुरुवाच करुणं सती ॥ ३२ ॥
योगेश्वराप्रमेयात्मन् देवदेव जगत्पते ।
हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज॥३३॥
श्रीशुक उवाच—
[इत्युक्त्वा जगृहे पादौ कृपणा दीनभाषिणी ।
भ्रातरं त्रातुकामा सा कृष्णस्य जगतीपतेः॥१॥]
तया परित्रासविकंपिताङ्गया
शुचावशुष्यन्मुखरुद्धकण्ठया ।
कातर्यविस्रंसितहेममालया
गृहीतपादः करुणो न्यवर्तत ॥ ३४ ॥
चैलेन बद्ध्वा तमसाधुकारिणं
सश्मश्रुकेशं प्रवपन्व्यरूपयत् ।
तावन्ममर्दुः परसैन्यमद्भुतं
यदुप्रवीरा नलिनीं यथा गजाः ॥ ३५ ॥
कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ।
तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ।
विमुच्य बद्धं करुणो भगवान्कृष्णमब्रवीत् ॥३६॥
असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम् ।
वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥ ३७॥
मैवास्मान्साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया ।
सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥ ३
बन्धुर्वधार्हदोषोऽपि न बन्धोर्वधमर्हति ।
त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ३९
क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ।
भ्राताऽपि भ्रातरं हन्याद्येन घोरतरस्ततः ॥४०॥
राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ।
मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ॥ ४१
तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ।
यन्मन्यसे सदाऽभद्रं सुहृदां भद्रमज्ञवत् ॥ ४२ ॥
आत्ममोहो नृणामेष कल्पते देवमायया ।

नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥४४॥
देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः ।
आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम्॥४५॥
नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ।
तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ॥ ४६ ॥
जन्मादयस्तु देहस्य विक्रिया नाऽऽत्मनः क्वचित् ।
कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ॥ ४७ ॥
यथा शयान आत्मानं विषयान्फलमेव च ।
अनुभुङ्क्तेऽप्यसत्यर्थे तथाऽऽप्नोत्यबुधो भवम्॥४८॥
तस्मादज्ञानजं शोकमात्मशोषविमोहनम् ।
तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते॥४९॥
श्रीशुक उवाच—
एवं भगवता तन्वी रामेण प्रतिबोधिता ।
वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥५०॥
प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ।
स्मरन्विरूपकरणं वितथात्ममनोरथः ॥ ५१ ॥

१ वीर० शरौघैस्तच्चिच्छेद । २ विज० द्विभुः । ३ उभ० गृहीत्वा खड्गचर्मणी । ४ वीर० तीक्ष्णं । ५ विज० पादयोः पत्यु । ६ विज० एकः श्लोकोधिकः । ७ विज० शुचा च । ८ विज० तावत्समीयुर्जितशत्रुसैन्या । ९ वीर० मुद्धतं । १० वीर० बन्धं ।

१ वीर० सुखदुःखमदो नान्यो । २ वीर० न बन्धो वध । विज० न बन्धुर्वध । ३ विज० अयं श्लोको नास्ति । ४ विज० सुहृच्छत्रुरुदासीन । ५ विज० क्षिप्तः । ६ विज० एतदादि-श्लोकद्वयं नास्ति । ७ वीर० श्वासता । ८ वीर० कलानामेव । ९ विज० तथात्मापि ध्रुवो ध्रुवान् । १० विज० बोध ।

[चक्रे भोजकटं नाम विवासाय महत्पुरम् ]।
अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ।
कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा ५२
भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् ।
पुरमानीय विधिवदुपयेमे कुरूद्वह ॥ ५३ ॥
तदा महोत्सवो नृणां यदुपुर्यां गृहेगृहे ।
अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥ ५४ ॥
नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः ।
पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥ ५५ ॥
सा वृष्णिपुर्युत्तभितेन्द्रकेतुभि-
र्विचित्रमाल्याम्बररत्नतोरणैः
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलै-
रापूर्णकुम्भाऽगुरुधूपदीपकैः ॥ ५६ ॥
सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ।
गजैर्द्वाःसु परामृष्टरंभापूगोपशोभिता ॥ ५७ ॥
कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः ।
मिथो मुमुदिरे तस्मिन्संभ्रमात्परिधावताम् ॥५८॥
रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः ।
राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥५९॥
द्वारकायामभूद्राजन्महामोदः पुरौकसाम् ।
रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियःपतिम् ६०

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ 59

## पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ 68

श्रीकृष्णस्य रुक्मिण्यां प्रद्युम्नोत्पत्तिः ॥ १ ॥ जातमात्रस्य तस्य शम्बरासुरेणापहारः ॥ २ ॥ तत्रस्थितया मायावतीनाम्न्या रतिदेव्या स्वभर्तुः प्रद्युम्नस्य पोषणं ॥ ३ ॥ मायावत्याः सकाशात्प्राप्तमहामायस्य प्रद्युम्नस्य शंबरवधपूर्वकं तया सह द्वारकामागत्य रुक्मिण्यन्तःपुरप्रवेशः ॥ ४ ॥ तत्रादर्शनं गतस्य प्रद्युम्नस्य प्राप्त्या श्रीकृष्णरुक्मिण्यादीनां हर्षप्राप्तिः ॥ ५ ॥

[श्रीशुक उवाच—
आराध्य देवदेवेशं शङ्करं लोकशङ्करम् ।
तपसा तोषयित्वा तं कैलासगिरिवासिनम् ॥१॥
रुक्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः ।
वीरं प्रद्युम्ननामानं रूपौदार्यगुणान्वितम् ॥ २ ॥
राजोवाच—
पुत्रार्थमीश्वरं दृष्ट्वा स्वयंलब्धवरो हरिः ।
अवाप कीदृशं पुत्रं किंनामानं वदस्व मे ॥३॥]
कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना ।
देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ १ ॥
स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः ।
प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥२॥
तं शंबरः कामरूपी हृत्वा तोकमनिर्दशम् ।
स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम् ३
तं निर्जगार बलवान्मीनः सोऽप्यपरैः सह ।
वृतो जालेन महता गृहीतो मत्स्यजीविभिः॥४॥
तं शंबराय कैवर्ता उपाजह्रुरुपायनम् ।
सूदा महानसं नीत्वाऽवद्यन्स्वधितिनाऽद्भुतम्॥५॥
दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन् ।
नारदोऽकथयत्सर्वं तस्याः शङ्कितचेतसः ।
बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥ ६ ॥
सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ।
पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥
निरूपिता शंबरेण सा सूपौदनसाधने ।
कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदाऽर्भके ॥८॥

---

१ उभ० इदमर्धमधिकं । २ वीर० दुर्मतिः । ३ वीर० यदूद्वहः । ४ वीर० मुपानिन्यु । ५ विज० त्रयः श्लोका अधिकाः ।

१ विज० र्युपयुक्त । २ विज० र्वास्तुपरामृष्टा । वीर० द्वार्षु । ३ वीर० मध्ये । ४ विज० धावतः । ५ विज० रुक्मिणीं रमणोपेतां । ६ विज० एकोनषष्ठितमोऽध्यायः । ७ वीर० सूदौदन । ८ विज० सदा ।

नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ।
जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥९
सा तं पतिं पद्मदलायतेक्षणं
प्रलंबबाहुं नरलोकसुन्दरम् ।
सव्रीडहासोत्तभितभ्रुवेक्षती
प्रीत्योपतस्थे रतिरङ्ग सौरतैः ॥ १० ॥
तामाह भगवान्कार्ष्णिर्मातस्ते मतिरन्यथा ।
मातृभावमतिक्रम्य वर्तसे कामिनी यथा ॥११॥
रतिरुवाच—
भवान्नारायणसुतः शंबरेणाऽऽहृतो गृहात् ।
अहं तेऽधिकृता पत्नी रतिः कामो भवान्प्रभो१२
एष त्वाऽनिर्दशं सिन्धावक्षिपच्छंबरोऽसुरः ।
मत्स्योऽग्रसीत्तदुदरादितः प्राप्तो भवान्प्रभो॥१३॥
तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः ।
मायाशतविदं त्वं च मायाभिर्मोहनादिभिः॥१४॥
परिशोचति ते माता कुररीव गतप्रजा ।
पुत्रस्नेहाकुला दीना विवत्सा गौरिवाऽऽतुरा १५
प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने ।
मायावती महामायां सर्वमायाविनाशिनीम् १६
स च शंबरमभ्येत्य संयुगाय समाह्वयत् ।
अविषह्यैस्तमाक्षेपैः क्षिपन्सञ्जनयन्कलिम् ॥ १७॥
सोऽधिक्षिप्तो दुर्वचोभिः पदाहत इवोरगः ।
निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥ १८ ॥
गदामाविध्य तरसा प्रद्युम्नाय महात्मने ।
प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥ १९ ॥
तामापतन्तीं भगवान्प्रद्युम्नो गदया गदाम् ।
अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप॥२०॥
स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् ।
मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २१ ॥

बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः ।
सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् २२
ततो गौह्यकगान्धर्वपैशाचोरगराक्षसीः ।
प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः २३
निशातमसिमुद्यम्य सकिरीटं सकुण्डलम् ।
शंबरस्य शिरः कायात्ताम्रश्मश्र्वोजसाऽहरत् २४
आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः
भार्ययांबरचारिण्या पुरं नीतो विहायसा ॥२५॥
अन्तःपुरवरं राजँल्ललनाशतसङ्कुलम् ।
विवेश पत्न्या गगनाद्विद्युतेव बलाहकः ॥ २६ ॥
तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् ।
प्रलंबबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ २७॥
स्वलङ्कृतमुखांभोजं नीलवक्रालकालिभिः ।
कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्रतत्र ह २८
अवधार्य शनैरीषद्वैलक्षण्येन योषितः ।
उपजग्मुः प्रमुदिताः सस्त्रीरत्नं सुविस्मिताः॥२९॥
अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी ।
अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३० ॥
कोऽन्वयं नरवैदूर्यः कस्य वा कमलेक्षणः ।
धृतः कया वा जठरे केयं लब्धा त्वनेन वा ३१
मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात् ।
एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥३२॥
कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वनः ।
आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥३३॥
स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः ।
अमुष्मिन्प्रीतिरधिका वामः स्फुरति मे भुजः ३४
एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः ।
देवक्यानकदुन्दुभ्यामुत्तमश्लोक आगमत् ॥३५॥

१ विज० हासोत्तमविभ्रमेक्षितैः । २ विज० रतिरात्मनो धनैः । ३ विज० कामिनीव मे । ४ वीर० दयिता । ५ वीर० कुरङ्गीव हतप्रजा । विज० कुररीव मृतप्रजा । ६ वीर० गौर्यथाऽऽतुरा । ७ विज० अवष्टभ्योष्टमाक्षेपैः । ८ वीर० स्वगदां नदन् । विज० स गदां नदन् । ९ वीर० मुमुचेऽश्ममयं । विज० निर्ममेऽश्ममयं ।

१ उभ० ऽश्मवर्षेण । २ वीर० महाबलः । ३ वीर० श्मश्रो-र्जहार तत् । विज० ताम्रश्मश्रु जहार तत् । ४ वीर० विबुधैः । ५ वीर० रत्नसङ्कुलं । ६ उभ० अलङ्कृत । ७ विज० भीता । ८ विज० उपधार्य । ९ उभ० शुचिस्मिताः । १० वीर० क्वेयं । ११ विज० लब्धाऽथ केन वा । १२ वीर० ममासावा-त्मजो । १३ विज० एतत्सम । १४ वीर० भगवान्नूनं । १५ वीर० गर्भगतोऽर्भकः । १६ विज० देवकीवसुदेवाभ्यां नारदेन महात्मना । अन्यैश्च यादवश्रेष्ठैरुत्तमश्लोक आविशत् ।

विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ।
नारदोऽकथयत्सर्वं शंबराहरणादिकम् ॥ ३६ ॥
तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ।
अभ्यनन्दन्बहूनब्दान्नष्टं मृतमिवाऽगतम् ॥ ३७॥
देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः ।
दंपती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ३८
नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ।
अहो मृत इवाऽऽयातो बालो दिष्ट्येति हाऽब्रुवन् ३९
यं वै मुहुः पितृसरूपनिजेशभावा-
स्तन्मातरो यदभजन्रहरूढभावाः ।
चित्रं न तत्खलु रमास्पदबिंबबिंबे
कामे स्मरेऽक्षिविषये किमुतान्यनार्यः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## षट्पञ्चशत्तमोऽध्यायः ॥ ५६ ॥ 60

स्यमन्तकोपाख्यानं ॥ १ ॥ जांबवता श्रीकृष्णाय जांबवतीप्रदानं ॥ २ ॥ श्रीकृष्णस्य सत्यभामाविवाहः ॥ ३ ॥

**श्रीशुक उवाच—**
सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ।
स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १ ॥
**राजोवाच—**
सत्राजितः किमकरोद्ब्रह्मन्कृष्णस्य किल्बिषम् ।
स्यमन्तकः कुतस्तस्य कस्माद्दत्ता सुता हरेः ॥२॥
**श्रीशुक उवाच—**
आसीत्सत्राजितः सूर्यो भक्तस्य परमः सखा ।
प्रीतस्तस्मै मणिं प्रादात्सूर्यस्तुष्टः स्यमन्तकम् ॥३॥
स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः ।
प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥
तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः ।
दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥
नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ।
दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥६॥
एष आयाति सविता त्वां दिदृक्षुर्जगत्पते ।
मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥७॥
नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः
ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥८॥
**श्रीशुक उवाच—**
निशम्य बालवचनं प्रहस्यांबुजलोचनः ।
प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ९
सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम् ।
प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ १० ॥
दिनेदिने स्वर्णभारानष्टौ स सृजति प्रभो ।
दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ।
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ११
स याचितो मणिं क्वापि यदुराजाय शौरिणा ।
नैवार्थकामुकः प्रादाद्याच्ञाभङ्गमतर्कयन् ॥ १२॥
तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ।
प्रसेनो हयमारुह्य मृगयां व्यचरद्वने ॥ १३ ॥
प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ।
गिरिं विशञ्जांबवता निहतो मणिमिच्छता ॥१४॥
सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ।
अपश्यन् भ्रातरं भ्राता सत्राजित्पर्यतप्यत ॥१५॥
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ।
भ्राता ममेति तच्छ्रुत्वा कर्णेकर्णेऽजपञ्जनाः ॥१६॥

१ विज० विदितार्थोपि । २ विज० इदमर्धं नास्ति । ३ वीर० पुनरिवागतं । ४ विज० अयं षष्टितमोध्यायः । ५ विज० सत्राजित्तनयां तन्वीं कृष्णाय कृतकिल्बिषः । ६ वीर० भक्तश्च परमः सदा । ७ विज० तिग्मरुक् । ८ वीर० अन्विच्छन्ति हि ते ।

१ वीर० इहायातो । २ विज० मनसिजार्द्रहृदोरुभावाः । ३ विज० बिंबभूते । ४ विज० अष्टषष्टितमोऽध्यायः । ५ विज० सर्वेपि । वीर० सर्वोधि । ६ विज० यद्राष्ट्रे । ७ विज० मणिः । ८ विज० बिलं ।

भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ।
मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥ १७ ॥
हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ।
तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ १८ ॥
ऋक्षराजबिलं भीममन्धेन तमसा वृतम् ।
एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १९
तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ।
हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ २० ॥
तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ।
तच्छ्रुत्वाऽभ्यद्रवत्क्रुद्धो जांबवान्बलिनां वरः २१
स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः ।
पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥२२॥
द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ।
आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३
आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः ।
वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥
कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः ।
क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥२५
जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ।
विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥
त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत्[1] ।
कालः कलयतामीशः पर आत्मा तथाऽऽत्मनां२७
यस्येषदुत्कलितरोषकटाक्षमोक्षै-
र्वर्त्मादिशत्क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।
सेतुः कृतः स्वयश[2] उज्ज्वलिता च लङ्का
रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥
इति विज्ञातविज्ञानमृक्षराजानमच्युतः ।
व्याजहार महाराज भगवान्देवकीसुतः ॥ २९ ॥
अभिमृश्यारविन्दाक्षः पाणिना शङ्करेण तम् ।
कृपया परया भक्तं प्रेमगंभीरया[3] गिरा ॥ ३० ॥
मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ।
मिथ्याऽभिशापं प्रमृजन्नात्मनो मणिनाऽमुना३१
इत्युक्तः स्वां दुहितरं कन्यां जांबवतीं मुदा ।
अर्हणार्थं स[1] मणिना कृष्णायोपजहार ह ॥३२॥
[ततोन्यैश्च मणिश्रेष्ठैः पूजितो भक्तवत्सलः[2] ।
तस्मै ददौ परां मुक्तिं पुनरावृत्तिवर्जिताम् ॥१॥]
अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः
प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ३३
निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः ।
सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम् ॥३४
सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः
उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥
तेषां तु देव्युपस्थानात्प्रत्यादिष्टाऽऽशिषा[3] स च ।
प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः ॥ ३६ ॥
उपलभ्य हृषीकेशं मृतं पुनरिवाऽऽगतम् ।
सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥३७॥
सत्राजितं समाहूय सभायां राजसन्निधौ ।
प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ३८
स चातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः ।
अनुतप्यमानो[4] भवनमगमत्स्वेन पाप्मना ॥३९॥
सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ।
कथं मृजाम्यात्मरजः प्रसीदेद्वाऽच्युतः कथम् ४०
किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ।
अदीर्घदर्शनं[5] क्षुद्रं मूढं द्रविणलोलुपम् ॥ ४१ ॥
दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ।
उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ४२
एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ।
मणिं च स्वयमुद्यम्य कृष्णायोपजहार[6] ह ॥४३॥
तां सत्यभामां भगवानुपयेमे यथाविधि ।
बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥४४

१ विज० सृष्टानामधिपो वसन् । २ वीर० स्वयशसोज्ज्व-लिता । ३ उभ० मेघगंभीरया ।

१ विज० सहमणिं । २ वीर० एकः श्लोकोऽधिकः । ३ वीर० शिषां स च । विज० शिषां भवन् । ४ विज० अनुतप्यन्स्वभवने । ५ वीर० दर्शनं मूढं मा धिग्द्रविणं । विज० दर्शनं धिङ्मां मूढं द्रविण । ६ विज० जहार तां ।

भगवानाह न मणिं प्रतीच्छामो वयं नृप। तवास्तु देवभक्तस्य वयं च फलभागिनः ॥४५

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ 61

कदाचित्कृष्णे हास्तिनपुरं गते शतधन्वना सत्राजितो वधः ॥ १ ॥ श्रीकृष्णेन शतधन्वनो वधः ॥ २ ॥ श्रीकृष्णेनाक्रूराय स्यमन्तकमणिदानं ॥ ३ ॥

श्रीशुक उवाच—
विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान्।
कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून् ॥१॥
भीष्मं कृपं सविदुरं गान्धारीं द्रोणमेव च।
तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥२॥
लब्ध्वैतदन्तरं राजञ्छतधन्वानमूचतुः।
अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ ३ ॥
योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः।
कृष्णायादान्न सत्राजित्कस्माद्भ्रातरमन्वियात् ॥ ४
एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः।
शयानमवधील्लोभात्स पापः क्षीणजीवितः ॥ ५ ॥
स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत्।
हत्वा पशून्सौनिकवन्मणिमादाय जग्मिवान् ॥६॥
सत्यभामा च पितरं हतं वीक्ष्य शुचाऽर्पिता।
व्यलपत्ताततातेति हा हताऽस्मीति मुह्यती ॥७॥
तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम्।
कृष्णाय विदितार्थाय तप्ताऽऽचख्यौ पितुर्वधम् ८
तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम्।
अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥ ९ ॥
आगत्य भगवांस्तस्मात्सभार्यः साग्रजः पुरम्।
शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः ॥ १० ॥
[ततः पाञ्चालनगराद्याज्ञसेन्याः स्वयंवरम्।
घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ॥ १ ॥
आहूतस्तेन गोविन्दो गत्वा पाञ्चालके पुरे।
ददर्श साग्रजस्तत्र किशोरान्पाण्डुनन्दनान् ॥२॥
अदृष्टपूर्वान्सुव्यक्तं ब्रह्मरूपधरान्नृप।
तैर्विद्धलक्ष्यैः पौरुष्यप्रतिलब्धमनोरथैः ॥ ३ ॥
कुंभकारस्य शालायां समागम्याभिवन्द्य च।
पितृष्वसामनुज्ञाप्य राजानं च युधिष्ठिरम्।
निहन्तुं शतधन्वानं तूर्णं द्वारवतीमियात् ॥ ४ ॥]
सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया।
साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥११॥
नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः।
कोनु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ॥ १२॥
कंसः सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया।
जरासन्धः सप्तदश संयुगान्विरथो गतः ॥ १३ ॥
प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत।
सोप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् १४
[यं कैलासाश्रयः शंभुर्ननाम शिरसा हरिम्।
यो हंसडिंभकौ युद्धे जितवान्वरदुर्मदौ।
आशीविषो महानागो येन निर्वासितो ह्रदात् १]
य इदं लीलया विश्वं सृजत्यवति हन्ति च।
चेष्टां विश्वसृजो यस्य न विदुर्मोहिताऽजया १५
यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना।
दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥१६
नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे।
अनन्तायादिभूताय कूटस्थायाऽऽत्मने नमः ॥१७
प्रत्याख्यातः स तेनापि शतधन्वा महामणिम्।

१ विज० अयं एकषष्ठितमोऽध्यायः। २ वीर० तुल्यकष्टान्। विज० समदुःखौ समागम्य। ३ वीर० ज्ञात्वा तदन्तरं। ४ वीर० तत्राचख्यौ। ५ विज० चत्वारः श्लोका अधिकाः।

१ विज० तवास्तु। २ विज० षष्टितमोऽध्यायः। ३ वीर० साहाय्यं। ४ वीर० सहानुगोपेतो। विज० सहानुगो वीरो। ५ विज० सार्धश्लोकोऽधिकः। ६ विज० यया।

तस्मिन्व्यस्याश्वमारुह्य शतयोजनगं ययौ ॥ १८॥
गरुडध्वजमारुह्य रथं रामजनार्दनौ ।
अन्वयातां महावेगैरश्वै राजन् गुरुद्रुहम् ॥ १९॥
मिथिलायामुपवने विसृज्य पतितं हयम् ।
पद्भ्यामधावत्सन्त्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा ॥२०॥
पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना ।
चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम्२१
अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् ।
वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥ २२ ॥
तत आह बलो नूनं स मणिः शतधन्वना ।
कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष पुरं व्रज ॥ २३ ॥
अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम ।
इत्युक्त्वा मिथिलां राजन्विवेश यदुनन्दनः॥२४॥
तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः ।
अर्हयामास विधिवदर्हणीयं समर्हणैः ॥ २५ ॥
उवास तस्यां कतिचिन्मिथिलायां समा विभुः ।
मानितः प्रीतियुक्तेन जनकेन महात्मना ।
ततोऽशिक्षद्गदां काले धार्तराष्ट्रः सुयोधनः॥२६॥
केशवो द्वारकामेत्य निधनं शतधन्वनः ।
अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद्विभुः२७
ततः स कारयामास क्रिया बन्धोर्हतस्य वै ।
साकं सुहृद्भिर्भगवान्याया: स्युः सांपरायिकाः२८
अक्रूरः च श्रुत्वा शतधनोर्वधम् ।
व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥२९॥
अक्रूरे प्रोषितेऽरिष्टान्यासन्वै द्वारकौकसाम् ।
शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः॥३०॥
[ततोऽपृच्छद्धरिर्वृद्धानुग्रसेनपुरोगमान् ।
कस्मादिहाऽरिष्टान्यासन्महता सुचिरेण नः ॥१॥]
इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुदाहृतम् ।
मुनिवासनिवासे किं घटेताऽरिष्टदर्शनम् ॥ ३१ ॥

देवेऽवर्षति काशीशः श्वफल्कायागताय वै ।
स्वसुतां गान्दिनीं प्रादात्ततोऽवर्षत्स्म काशिषु ३२
तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह ।
देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥३३॥
इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् ।
इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥३४॥
पूजयित्वाऽभिभाष्यैनं कथयित्वा प्रियाः कथाः ।
विज्ञाताखिलचित्तज्ञः स्मयमान उवाच ह॥३५॥
ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना ।
स्यमन्तको मणिः श्रीमान्विदितः पूर्वमेव नः ३६
सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः ।
दायं यापः पिण्डान्विमुच्यर्णं च शेषितम्३७
तथापि दुर्धरस्त्वन्यैस्त्वय्यास्तां सुव्रते मणिः ।
किं तु मामग्रजः सम्यङ्न प्रत्येति मणिं प्रति ॥३८॥
दर्शयस्व महाभाग बन्धूनां शान्तिमावह ।
अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ३९
एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ।
आदाय वाससा च्छन्नं ददौ सूर्यसमप्रभम्॥४०॥
स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः ।
विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ॥४१॥
[मार्जयामास लोकेशः अभिभाष्य हलायुधम् ।
दृष्ट्वा मणिं हलधरस्तदर्थं प्रोष्य आगतः ॥ १ ॥
योग्योऽहमिति मन्वानश्चकमे कुरुपुङ्गव ।
सत्यभामा पितृधनं मन्वाना स्वात्मनोचितम् २
ग्रहीतुमैच्छद्विस्रब्धं हरेश्चित्तमजानती ।
जाम्बवत्यपि शुल्कार्थं पित्रा दत्तं ममेति ह ॥३॥
स्पृहां चक्रे मणौ तस्मिन्सर्वं विज्ञाय माधवः ।
अक्रूरस्य करे भूयो मणिं प्रत्यर्पयद्विभुः ॥ ४ ॥]

१ उभ० पदातेर्धावतस्तस्य । २ वीर० तमन्वेष्टुं । विज० तमन्वेषन्पुरं । ३ उभ० इदमर्धं "धार्तराष्ट्रः सुयोधनः" इत्यनन्तरं वर्तते । ४ विज० क्रियां बन्धोर्मृतस्य वै । ५ विज० एकः श्लोकोऽधिकः । ६ विज० विस्मिता वै गदाभृतः । ७ विज० निवासनिकटे किं वा ।

१ विज० गां । २ वीर० त्स काशिषु । ३ विज० यत्र तत्र सः । ४ वीर० इति दूतैस्तमानीय । विज० इति दूतैः समानीय । ५ विज० रामाक्रूरौ । ६ विज० अक्रूरं मानयन्कृष्णः । ७ विज० तत्वज्ञः । ८ विज० त्वय्यसौ । ९ वीर० दानं । १० विज० मुच्यर्णमशेषतः । ११ विज० दुर्धरो ह्यन्यै । १२ विज० प्रापितो । १३ विज० रारब्धः । १४ विज० इदमर्धं नास्ति । १५ विज० कुण्डलिता एते श्लोका अधिकाः ।

यस्त्वेतद्भगवत ईश्वरस्य विष्णो-
र्वीर्याढ्यं वृजिनहरं सुमङ्गलं च।
आख्यानं पठति शृणोत्यनुस्मरेद्वा
दुष्कीर्तिं दुरितमपोह्य याति शान्तिम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ 62

श्रीकृष्णस्य कालिन्दीमित्रविन्दादीनां विवाहः ॥ १ ॥

उवाच—
एकदा पाण्डवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः।
इन्द्रप्रस्थं गतः श्रीमान्युयुधानादिभिर्वृतः ॥ १ ॥
दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम्।
उत्तस्थुर्युगपद्वीराः प्राणा मुख्यमिवाऽऽगतम् ॥ २ ॥
परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः।
सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥ ३ ॥
युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्।
फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवन्दितः ४
परमासन आसीनं कृष्णा कृष्णमनिन्दिता।
नवोढा व्रीडिता किंचिच्छनैरेत्याभ्यवन्दत ॥ ५ ॥
तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः।
निषसादाऽऽसनेऽन्ये च पूजिताः पर्युपासते ॥ ६ ॥
पृथां समागत्य कृताभिवादन-
स्तयाऽतिहार्दार्द्रदृशाऽभिरंभितः।
आपृष्टवांस्तां कुशलं सहस्नुषां
पितृष्वसारं परिपृष्टबान्धवः ॥ ७ ॥
तमाह प्रेमवैक्लव्यरुद्धकण्ठाश्रुलोचना।
स्मरन्ती तान्बहून्क्लेशान्क्लेशापायात्मदर्शनम् ॥ ८ ॥
तदैव कुशलं नोऽभूत्सनाथास्ते कृता वयम्।
ज्ञातीन्नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ९
[पाञ्चालेषु स्थितानस्मान्स्वयंवरकृते तदा।
अनुस्मृत्यागतो यस्त्वं तेन सास्मि सुखोषिता ॥ १ ॥
इत्युक्तायां तदा कुन्त्यां प्राह योगेश्वरः स्वयम्।
पाञ्चालेषु स्थितानेत्य सुतांस्ते छद्मरूपिणः ॥ २ ॥
कुंभकारस्य शालायामुषितान्सह भार्यया।
दृष्ट्वा गतोऽहं दिवसे तस्मिन्नेवाविलंबितः ॥ ३ ॥
निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम्।
शतधन्वनि दुर्बुद्धौ हते सीरधरोऽग्रजः ॥ ४ ॥
कुपितो मामनादृत्य विदेहान्विमना ययौ।
एतावन्तं महाकालं तदागमनकाङ्क्षया ॥ ५ ॥
पुरएवावसं क्वापि नागच्छं कार्ययन्त्रितः।
इत्येवंवादिनं कुन्ती प्राह स्नेहपरिप्लुता ॥ ६ ॥]
न तेऽस्ति स्वपरभ्रान्तिर्विश्वस्य सुहृदात्मनः।
तथापि स्मरतां शश्वत्क्लेशान्हंसि हृदि स्थितः १०
युधिष्ठिर उवाच—
किं न आचरितं श्रेयो न वेदाहमधीश्वर।
योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम् ॥ ११
इति वै वार्षिकान्मासान्राज्ञा सोऽभ्यर्थितः सुखम्
जनयन्नयनानन्दमिन्द्रप्रस्थौकसां विभुः ॥ १२ ॥
एकदा रथमारुह्य विजयो वानरध्वजम्।
गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ ॥ १३ ॥
साकं कृष्णेन सन्नद्धो विहर्तुं विपिनं वनम्।
बहुव्यालमृगाकीर्णं प्राविशत्परवीरहा ॥ १४ ॥
तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून्।
शरभान्गवयान्खड्गान्हरिणाञ्छशशल्लकान् ॥ १५ ॥
तान्निन्युः किङ्करा राज्ञे मेध्यान्पर्वण्युपागते।

१ विज० वीर्याढ्यं। २ विज० अयं द्विषष्टितमोऽध्यायः। ३ विज० प्राणं मुख्य। ४ विज० पर्युपासते। ५ विज० स्वत्कुशलं। ६ विज० नोऽभूयत्सनाथाः कृता। ७ विज० ज्ञातुं नः। ८ विज० एते षड्श्लोका अधिका वर्तन्ते।

१ विज० एकषष्टितमोऽध्यायः। २ विज० स्वः पर इति। ३ विज० सर्वान्क्लेशा। ४ विज० अयं श्लोको नास्ति। ५ वीर० विजनं वनं।

तृट्[1]परीतः परिश्रान्तो बीभत्सुर्यमुनामगात्॥१६॥
तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ।
कृष्णौ ददर्शतुः कन्यां चरन्तीं चारुदर्शनाम् १७
तामासाद्य वरारोहां सुद्विजां रुचिराननाम् ।
पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम्१८
का त्वं कस्यासि सुश्रोणि कुतोऽसि किं चिकीर्षसि
मन्ये त्वां पतिमिच्छन्तीं सर्वं कथय शोभने॥१९

**कालिन्द्युवाच—**

अहं देवस्य सवितुर्दुहिता पतिमिच्छती ।
विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥ २० ॥
नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ।
तुष्यतां मे स भगवान्मुकुन्दोऽनाथसंश्रयः ॥२१॥
कालिन्दीति समाख्याता वसामि यमुनाजले ।
निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥२२॥
तथाऽवदद्गुडाकेशो वासुदेवाय सोऽपि ताम् ।
रथमारोप्य तद्विद्वान्धर्मराजमुपागमत् ॥ २३ ॥
यदैव कृष्णः संदिष्टः पार्थानां परमाद्भुतम् ।
कारयामास नगरं विचित्रं विश्वकर्मणा ॥ २४ ॥
भगवांस्तत्र निवसन्स्वानां प्रियचिकीर्षया ।
अग्नये खाण्डवं दातुमर्जुनस्याऽऽस सारथिः ॥२५
सोऽग्निस्तुष्टो धनुरदाद्धयान् श्वेतान्रथं नृप ।
अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः॥२६॥
मयश्च मोचितो वह्नेः सभां सख्य उपाहरत् ।
यस्मिन्दुर्योधनस्याऽऽसीज्जलस्थलदृशिभ्रमः॥२७॥
स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः ।
आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः॥२८॥
अथोपयेमे कालिन्दीं सुपुण्यर्त्वृक्ष ऊर्जिते ।
[रूपयौवनसंपन्नां मनोनयननन्दिनीम् ।]
वितन्वन्परमानन्दं स्वानां परममङ्गलम् ॥ २९ ॥
विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ ।
स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ३०
राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः ।
प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यताम्॥३१॥
नग्नजिन्नाम कौशल्य आसीद्राजाऽतिधार्मिकः ।
तस्य सत्याऽभवत्कन्या देवी नाग्नजिती नृप ३२
न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् ।
तीक्ष्णशृङ्गान्सुदुर्धर्षान्वीरगन्धासहान्खलान् ३३
तां श्रुत्वा वृषजिल्लभ्यां भगवान्सात्वतां पतिः ।
जगाम कौशल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥
स कोशलपतिः प्रीतः प्रत्युत्थानासनादिभिः ।
अर्हणेनापि गुरुणा पूजयन्प्रतिनन्दितः ॥ ३५ ॥
वरं विलोक्याभिमतं समागतं
नरेन्द्रकन्या चकमे रमापतिम् ।
भूयादयं मे पतिराशिषोऽमलाः
करोतु सत्या यदि मे धृतो व्रतैः ॥ ३६ ॥
यत्पादपङ्कजरजः शिरसा बिभर्ति
श्रीरब्जजः सगिरिशः सहलोकपालैः ।
लीलातनूः स्वकृतसेतुपरीप्सया यः
काले दधत्स भगवान्मम केन तुष्येत् ॥ ३७ ॥
अर्चितं पुनरित्याह नारायण जगत्पते ।
आत्मानन्देन पूर्णस्य करवाणि किमल्पकः ॥३८॥

**श्रीशुक उवाच—**

तमाह भगवान् हृष्टः कृतासनपरिग्रहः ।
मेघगंभीरया वाचा सस्मितं कुरुनन्दन ॥ ३९ ॥

---

१ वीर० ततः क्षुत्तृट्परिश्रान्तोः । २ विज० मृष्टमणिप्रभं । ३ विज० सुदतीं । ४ उभ० कुतो वा । ५ वीर० कन्ये कथय । विज० कन्यां कथय । ६ विज० वत्सलः । ७ विज० वसंस्तत्र हृषीकेशः शक्रप्रस्थे यथासुखम् । ८ विज० विश्वकर्माणमाहूय शिल्पविद्याविशारदं । अद्भुतं कारयामास नगरं धर्मसूनवे । सप्रासादपुरद्वारगोपुराट्टालतोरणं । ९ विज० पुरन्दरपुरप्रख्यं स्वानां प्रियचिकीर्षया ।। १० विज० एतदाद्यर्धपञ्चकं नास्ति । ११ वीर० मतिभ्रमः । १२ विज० अथ पार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः । १३ विज० पुण्ये नक्षत्र ऊर्जिते ।

१ विज० इदमर्धमधिकं । २ विज० कृष्णकामां । ३ विज० राजन्नीलेति आव्हया । ४ विज० वीरगन्धान्महाघनान् । ५ विज० प्रत्यनन्दत । ६ विज० त्रिलोक्याभिमतं । ७ विज० राशिषां पतिः । ८ वीर० सत्या यदहं धृतव्रता । विज० सत्यो यदि मे धृतव्रतः । ९ उभ० अयमुत्तरश्च श्लोकौ पूर्वोत्तरतया वर्तेते । १० विज० श्रीरब्जजश्च । ११ विज० लीलातनुः । १२ उभ० परीप्सया यः । १३ विज० न्स्वकृतेन तुष्येत् । १४ विज० आत्मना देव । १५ उभ० कृष्णः ।

श्रीभगवानुवाच

[अन्यत्र काले ... स्वयंवरा-
दयाचितारं वरमाहुरुत्तमम् ।
स हि प्रभूणां पुरुषार्थभागिनी
वेलां विना ह्राययति क्षितीश्वर ॥ १ ॥]
नरेन्द्र याच्ञा कविभिर्विगर्हिता
राजन्यबन्धोर्निजधर्मवर्तिनः ।
तथाऽपि याचे तव सौहृदेच्छया
कन्यां त्वदीयां न हि शुल्कदा वयम् ॥ ४० ॥

राजोवाच—

कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ।
गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी ॥४१॥
किंत्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ।
पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥ ४२ ॥
सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः ।
एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥४३॥
यदि मे निगृहीताः स्युस्त्वयैव यदुनन्दन ।
वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥ ४४ ॥
एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ।
आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ४५
बद्ध्वा तान्दामभिः शौरिर्भग्नदर्पान् हतौजसः ।
व्यकर्षल्लीलया बद्धान्बालो दारुमयान्यथा ॥४६॥
ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः ।
तां प्रत्यगृह्णाद्भगवान्विधिवत्सदृशीं प्रभुः ॥४७॥
राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ।
लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ४८ ॥
शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः ।
नरा नार्यः प्रमुदिताः सुवासःस्रगलङ्कृताः ॥४९॥
दशधेनुसहस्राणि पारिबर्हमदाद्विभुः ।
युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥५०॥
नवनागसहस्राणि नागाच्छतगुणान्रथान् ।
रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान् ॥ ५१ ॥
दंपती रथमारोप्य महत्या सेनया वृतौ ।
स्नेहप्रक्लिन्नहृदयो यापयामास कोशलः ॥ ५२ ॥
तद्रुरुधुर्भूपा नयन्तं पथि कन्यकाम् ।
भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥ ५३ ॥
तानस्यतः शरव्रातान्बन्धुप्रियकृदर्जुनः ।
गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव ५४
पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया ।
रेमे यदूनामृषभो भगवान्देवकीसुतः ॥ ५५ ॥
श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ।
कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ५६
सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ।
स्वयंवरे जहारैकः ससुपर्णः सुधामिव ॥ ५७ ॥
अन्याश्चैवंविधा भार्याः कृष्णस्याऽऽसन्सहस्रशः ।
भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥५८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## ऊनषष्टितमोऽध्यायः ॥ ५९ ॥ 63

नरकासुरवधः ॥१॥ षोडशसहस्रमहिषीणां विवाहः ॥२॥ इन्द्रलोकं गत्वा अदित्यै कुण्डलदानं पारिजातहरणं च ॥३॥

राजोवाच—

यथा हतो भगवता भौमो येन च ताः स्त्रियः ।
निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥

उवाच—

[द्वारवत्यां महाभागे निवसत्यच्युते नृप ।

---

१ विज० एकः श्लोकोधिकः । २ वीर० कन्याया ईप्सितो वरः । ३ वीर० यदीमे । ४ वीर० विभुः । ५ वीर० भग्नदन्तान् । विज० भग्नवीर्यान् । ६ वीर० व्याचकर्ष तथा बध्वा । ७ विज० अयं त्रिषष्टीतमोऽध्यायः ॥६३॥ ८ विज० नीता यथा स्त्रियः ।

१ उभ० स्वदुहितुः । २ विज० एतदादिश्लोकद्वयं नास्ति । ३ वीर० मुपानीय । विज० च संगृह्य । ४ विज० मोऽध्यायः ॥ ६२ ॥ ५ विज० एकः श्लोकोऽधिकः ।

दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपात् ॥१॥]
इन्द्रेण हृतच्छत्रेण हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ।
[इन्द्रमाश्वास्य गोविन्दः सुसंपूज्य विसृज्य च ।]
सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥२॥
गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ।
मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥ ३ ॥
गदया निर्बिभेदाद्रीञ्छस्त्रदुर्गाणि सायकैः ।
चक्रेणाग्निं जलं वायुं मुरपाशांस्तथाऽसिना ॥४॥
शङ्खनादेन यन्त्राणि हृदयानि मनस्विनाम् ।
प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥५॥
पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् ।
मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात्॥६
त्रिशूलमुद्यम्य सुदुर्निरीक्षणो
युगान्तसूर्यानलरोचिरुल्बणः ।
ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखै-
रभ्यद्रवत्तार्क्ष्यसुतं यथोरगः ॥ ७ ॥
आविध्य शूलं तरसा गरुत्मते
निरस्य वक्त्रैर्व्यनदत्स पञ्चभिः ।
स रोदसी सर्वदिशोऽम्बरं महा-
नापूरयन्नण्डकटाहमावृणोत् ॥ ८ ॥
तदाऽऽपतद्वै त्रिशिखं गरुत्मते
हरिः शराभ्यामभिनत्त्रिधौजसा
मुखेषु तं चापि शरैरताडय-
त्तस्मै गदां सोऽपि रुषा व्यमुञ्चत ॥ ९ ॥
तामापतन्तीं गदया गदां मृधे
गदाग्रजो निर्बिभिदे सहस्रधा ।
उद्यम्य बाहूनभिधावतोऽजितः
शिरांसि चक्रेण जहार लीलया ॥ १० ॥
व्यसुः पपातांभसि कृत्तशीर्षो
निकृत्तशृङ्गोऽद्रिरिवेन्द्रतेजसा ।
[पपात विष्णोः शिरसि प्रमोदिनी
प्रसूनवृष्टिर्निहते मुरेऽसुरे ।]
तस्यात्मजाः सप्त पितुर्वधातुराः
प्रतिक्रियामर्षजुषः समुद्यताः ॥ ११ ॥
ताम्रोऽन्तरिक्षः श्रवणो विभावसु-
र्वसुर्नभस्वानरुणश्च सप्तमः ।
पीठं पुरस्कृत्य चमूपतिं मृधे
भौमप्रयुक्ता निरगन्धृतायुधाः ॥ १२ ॥
प्रायुञ्जताऽऽसाद्य शरानसीन्गदाः
शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ।
तच्छस्त्रकूटं भगवान्स्वमार्गणै-
रमोघवीर्यस्तिलशश्चकर्त ह ॥ १३ ॥
तान्पीठमुख्याननयद्यमक्षयं
निकृत्तशीर्षोरुभुजाङ्घ्रिवर्मणः ।
स्वानीकपानच्युतचक्रसायकै-
स्तथा निरस्तान्नरको धरासुतः ॥ १४ ॥
निरीक्ष्य दुर्मर्षण आस्रवन्मदै-
र्गजैः पयोधिप्रभवैर्निराक्रमत् ।

१ विज० हृतच्छत्रेण शक्रेण । २ विज० इदमर्धमधिकं । ३ विज० एतदादि श्लोकत्रयस्थने पञ्च श्लोकाः सन्ति । तेच— हिमाद्रौ तुङ्गशिखरे जलाग्न्यनिलदुर्गमम् । गिरिदुर्गैः शस्त्रदुर्गैर्मुरपाशायुतैर्वृतम् ॥ १ ॥ स संप्राप्य भटैर्गुप्तं दानवेन्द्रपुरं महत् । गदया निर्बिभेदाद्रिं प्राकाराकारसंस्थितम् ॥ २ ॥ स निर्भिद्य प्रविश्यान्तः शस्त्रदुर्गाणि सायकैः । चकर्त मौरवं पाशं चक्रेणामन्दमच्छिनत् ॥ ३ ॥ क्षुरमालां तथा घोरां निचकर्तासिना हरिः । वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम् ॥ ४ ॥ हरिर्निमिषमात्रेण नाशयामास भारत । शङ्खनादेन तिव्रेण मनांसिच मनस्विनाम् ॥ ५ ॥ ४ विज० निरीक्ष्यो । ५ विज० रुज्ज्वलः । ६ उभ० खं रोदसी । ७ विज० दिशोन्तरं । ८ विज० तमापतन्तं त्रिशिखं गरुत्मते चकर्त बाणद्वितयेन केशवः ।

१ विज० मुखेषु तस्यापि शरान्समर्पयन्पुनर्गदां सोप्यमुचन्मधुद्विषे । २ विज० दिशः । ३ विज० कृत्तकन्धरो ४ विज० पक्षो । ५ विज० अर्धमधिकं । ६ विज० चिकीर्षवस्तस्य रणे प्रतिक्रियाम् । ७ विज० अर्धत्रयं भिन्नपा[illegible] दृश्यते तद्यथा—ध्रुवश्च विष्णुः श्रवणो विभावसुर्नभो विवस्वानरुणश्च सप्त । रथान्समारुह्य वृषप्रयुक्तान्भौमप्रयुक्ता भवनान्निराक्रमन् । अयुञ्जतासज्य शरासनान्भटाः शक्त्यृष्टिशूलानजिरे रुषोल्बणान् । ८ वीज० तान्योद्धुमिच्छूननय । ९ विज० कार्मुकान् । १० विज० हतान्निशम्याशु चुकोप भूमिजः ।

[रथैरनेकसाहस्रैर्गजैश्च बहुभिर्वृतः ।
महत्या सेनया युक्तश्चायादायोधनं बली ॥१॥ ]
दृष्ट्वा सभार्यं गरुडोपरि स्थितं
सूर्योपरिष्टात्सतडिद्घनं यथा ।
कृष्णं स तस्मै व्यसृजच्छतघ्नीं
योधाश्च सर्वे युगपत्स्म विव्यधुः ॥ १५ ॥
तद्भौमसैन्यं भगवान्गदाग्रजो
विचित्रवाजैर्निशितैः शिलीमुखैः ।
निकृत्तबाहूरुशिरोध्रविग्रहं
चकार तत्रैव हताश्वकुञ्जरम् ॥ १६
यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ।
हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः॥१७॥
उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् ।
गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः ॥१८॥
पुरमेवाऽऽविशन्नार्ता नरको युध्ययुध्यत ।
दृष्ट्वा विद्रावितं सैन्यं गरुडेनाऽऽर्दितं स्वकम् १९
तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः ।
नाकंपत तयाविद्धो मालाहत इव द्विपः ॥२०॥
[न किंचिदपि राजेन्द्र चचाल नरकाहवे ।
ततः कार्मुकमादाय नरकः शरसञ्चयान् ।
मुमोच कृष्णे तान्सर्वानच्छिनत्केशवः शरैः॥१॥
ततोऽर्धचन्द्रं नरकं सुसन्धाय शरासने ।
आकृष्टुकामं विज्ञाय तच्चापं केशवोऽच्छिनत्॥२॥
ततः कालायसमयीं गदां गुर्वीं धरासुतः ।
आददे तां क्षुरप्रेण चकर्त मधुसूदनः ॥ ३ ॥
ततो निशातं परशुं भौमः परबलार्दनः ।
प्राहिणोद्विष्णवे तं च चिच्छेद श्रीधरोऽसिना ४
ततः कृष्णाय चिक्षेप तोमरान्पञ्चसप्ततिम्
चकार सिंहनादं च नरकः परवीरहा ॥ ५ ॥
तांस्तोमरान्कुरुश्रेष्ठ शरेणैकेन केशवः ।
चिच्छेद यौगपद्येन तदद्भुतमिवाभवत् ॥ ६ ॥ ]
शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः ।
तद्विसर्गात्पूर्वमेव नरकस्य शिरो हरिः ।
अपाहरद्गजस्थस्य चक्रेण क्षुरनेमिना ॥ २१ ॥
सकुण्डलं चारुकिरीटभूषणं
बभौ पृथिव्यां पतितं समुज्ज्वलत् ।
साध्वित्यृषयः सुरेश्वरा
माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥ २२ ॥
[हत्वा हरिर्नरकं दैत्यवर्यं
मरुद्गणैः सहितो लोकपालैः ।
समाहूतः पौरमुख्यैः सभार्यः
प्राग्ज्योतिषं प्राविशद्द्रष्टुकामः ॥ १ ॥
तत्रापश्यद्यदुश्रेष्ठो विचित्रं मणिपर्वतम् ।
छत्रं च वारुणं हृद्यं सलिलस्रावि भारत ॥ २ ॥
शक्राय प्राहिणोद्भूयः केशवो मणिपर्वतम् ।
वरुणाय तथा च्छत्रं प्राहिणोद्दैत्यकिङ्करैः ॥ ३ ॥
तान्विसृज्य हरिर्देवान्स्वयमेव जगत्पतिः ।
प्राविशद्भौमसदनं पुरन्दरपुरोपमम् ॥ ४ ॥]
ततश्च भूः कृष्णमुपेत्य कुण्डले
प्रतप्तजाम्बूनदरत्नभास्वरे
सवैजयन्त्या वनमालयाऽर्पय-
त्प्राचेतसं छत्रमथो महामणिम् ॥ २३ ॥
अस्तौषीदथ विश्वेशं देवी देववरार्चितम् ।
प्राञ्जलिः प्रणता राजन्भक्तिप्रवणया धिया २४

१ विज० एकः श्लोकोऽधिकः । २ विज० एतदाद्यर्धत्रयस्थाने सार्धचत्वारः श्लोका दृश्यन्ते । ते च—गृहीतकोदण्डमुदारशङ्खकौमोदकीचक्रधरं चतुर्भुजम् । नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहनम् । शङ्खमाध्माय गोविन्दः सिंहनादं व्यनीनदत् । वरूथिनी दैत्यपतेः सुघोराञ्शरान्ववर्षाच्युतमूर्ध्नि दुर्जया । कृष्णे स भौमो व्यसृजच्छतघ्नीं लोहायसीं तेन भृशं स विव्यथे । अनेकबाणान्निर्मुक्तान्नरकेण स्मयन्निव । चकर्त बाणैर्युगपत्तदद्भुतमिवाभवत् । ततोऽनु सैन्यं भगवान्गदाग्रजो विचित्रपत्रैर्निशितैः शरौघैः । निकृत्तबाहूरुशिरोङ्घ्रिविग्रहं चकार तूर्णं नृप साश्वकुञ्जरम् । त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ३ विज० चतुष्षष्टितमाध्यायारंभः ॥ ६४ ॥ ४ विज० तुरङ्गमाश्च दुर्धर्षाः पेतुरुर्व्यां गतासवः । ५ विज० वज्रेणेव हरिर्गिरिम् । ६ विज० तयातिविद्धो गरुडो । ७ विज० एते षड् श्लोका अधिकाः ।

१ उभ० भूषितं । २ वीर० शिरः पृथिव्यां । ३ विज० एते चत्वारः श्लोका अधिकाः । ४ विज० ततो धरा । ५ विज० पौत्रं च वीरं भगदत्तसंज्ञितं निवेद्य मालामपि वैजयन्तीम् ।

भूमिरुवाच—

नमस्ते देवदेवेश शङ्खचक्रगदाधर ।
भक्तेच्छोपात्तरूपाय परमात्मन्नमोऽस्तु ते ॥२५॥
नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २६ ॥
नमो भगवते तुभ्यं वासुदेवाय विष्णवे ।
पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥ २७॥
अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये ।
परावरात्मन्भूतात्मन्परमात्मन्नमोऽस्तु ते ॥२८॥
त्वं वै सिसृक्षू रज उत्कटं प्रभो
तमो निरोधाय बिभर्ष्यसंवृतः ।
स्थानाय सत्त्वं जगतो जगत्पते
कालः प्रधानं पुरुषो भवान्परः ॥ २९ ॥
अहं पयो ज्योतिरथानिलो नभो
मात्राणि देवा मन इन्द्रियाणि ।

त्वय्यद्वितीये भगवन्नयं भ्रमः ॥ ३० ॥
[यदाऽहमुद्धृता नाथ त्वया सूकरमूर्तिना ।
त्वत्स्पर्शसंभवः पुत्रस्तदाऽयं मेऽभ्यजायत ।
सोऽयं त्वयैव दत्तो मे त्वया च विनिपातितः १]
तस्याऽऽत्मजोऽयं तव पादपङ्कजं
भीतः प्रपन्नार्तिहरोपसादितः ।
तत्पालयैनं कुरु हस्तपङ्कजं
शिरस्यमुष्याखिलकल्मषापहम् ॥ ३१ ॥

श्रीशुक उवाच—

इति भूम्याऽर्थितो वाग्भिर्भगवान्भक्तिनम्रया ।
दत्त्वाऽभयं भौमगृहं प्राविशत्सकलर्द्धिमत् ॥३२॥

१ विज० चराचरात्मँल्लोकेश । २ विज० उत्कटः । ३ विज० बिभर्षि संवृतः । ४ विज० जगत्प्रभो । ५ विज० प्रधानः पुरुषोस्य पारः । ६ वीर० रथानलोऽनिलो । विज० रथोऽनिलो नभो । ७ विज० तु कारणं । ८ इदमर्धत्रयं केषुचिन्मुद्रितपुस्तकेष्वधिकं दृश्यते । ९ विज० प्रपन्नार्तिहरं प्रसादितुम् । १० वीर० तं पालयैनं । ११ उभ० भूम्यार्चितो । १२ विज० प्रसन्नः प्रददौ तस्मै भगदत्ताय चाभयम् ।



[राज्ये नियोज्य तं वंश्ये तदमात्यांश्च तत्पदे ।
भौमावरोधकान्तानां श्रेणीं संप्राविशद्धरिः॥१॥]
तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् ।
भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ३३
तं प्रविष्टं स्त्रियो वीक्ष्य[ताः सर्वा नवयौवनाः ।
स्वलङ्कृता विचित्राङ्ग्यो]नरवीरं विमोहिताः ।
मनसा वव्रिरेऽभीष्टं पतिं दैवोपसादितम् ॥३४॥
भूयात्पतिरयं मह्यं धाता तदनुमोदताम् ।
इति सर्वाः पृथक्कृष्णे भावेन हृदयं दधुः ॥३५॥
ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोंबराः ।
नरयानैर्महाकोशान्रथाश्वान्द्रविणं महत् ॥ ३६ ॥
ऐरावतकुलेभांश्च चतुर्दन्तांस्तरस्विनः
[भगदत्ताय दत्त्वैकं सुप्रतीकं ततोऽपरान् ।]
पाण्डुरांश्च चतुःषष्टिं प्रेषयामास केशवः ॥३७॥
गत्वा सुरेन्द्रभवनं दत्त्वाऽदित्यै च कुण्डले ।
पूजितस्त्रिदशेन्द्रेण सहेन्द्राण्या च सप्रियः॥३८॥
चोदितो भार्ययोत्पाट्य पारिजातं गरुत्मति ।
आरोप्य सेन्द्रान्विबुधान्निर्जित्योपानयत्पुरम्॥३९
स्थापितः सत्यभामाया गृहोद्यानोपशोभनः ।
अन्वगुर्भ्रमराः स्वर्गात्तद्गन्धासवलंपटाः ॥ ४० ॥
ययाच आनम्य किरीटकोटिभिः
पादौ स्पृशन्नच्युतमर्थसाधनम् ।
सिद्धार्थ एतेन विगृह्यते महा-
नहो सुराणां च तमोधिगाढ्यताम् ॥ ४१ ॥
अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः ।
यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥ ४२ ॥
गृहेषु तासामनपाय्यतर्क्यकृ-
न्निरस्तसाम्यातिशयेष्ववस्थितः ।

१ विज० अयं श्लोकोऽधिकः । २ विज० पादद्वयमधिकं । ३ वीर० वरवर्यं । विज० नरवर्यं । ४ उभ० दैवोपपादितं । ५ विज० इति सर्वेश्वरे कृष्णे ता नार्यो हृदयं दधुः । ६ विज० रुचिरांबराः । ७ विज० खैरुष्ट्रैर्महा । ८ उभ० रथांश्च । ९ विज० न्मदोत्कटान् । १० विज०इदमर्धमधिकं । ११ विज० ऱ्तुष्षष्टितमोऽध्यायः ॥ ६४ ॥ १२ विज० एतदारभ्य अध्यायसमाप्ति अष्टौ श्लोका न सन्ति । १३ वीर० महेन्द्राण्या ।

रेमे रमाभिर्निजकामसंप्लुतो
यथेतरो गार्हकमेधिकांश्चरन् ॥ ४३ ॥
[स्वदारेषु पृथग्भावो भक्तचित्तानुवर्तिनः ।
अनन्तस्याद्वितीयस्य किंतु चित्रं सुरद्विषः ॥ १ ॥
योगेश्वरेश्वरः कृष्णो भक्तैरद्यापि लक्ष्यते ।
अन्तर्बहिः समन्ताच्च शतधा च सहस्रधा ॥२॥]
इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।
भेजुर्मुदाऽविरतमेधितयाऽनुराग-
हासावलोकनवसंगमजल्पलज्जाः ॥ ४४ ॥
प्रत्युद्गमासनवरार्हणपादशौच-
तांबूलविश्रमणवीजनगन्धमाल्यैः ।
केशप्रसारशयनस्नपनोपहार्यै-
र्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥[5]

## [ विजयध्वजीयपाठे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

नरकासुरवधानन्तरं कुण्डले दातुं सत्यभामासहितस्य श्रीकृष्णस्य स्वर्लोकगमनं ॥ १ ॥ सत्यभामाप्रार्थनया श्रीकृष्णेन नन्दनवनात्पारिजातहरणं ॥ २ ॥ देवैः श्रीकृष्णेन सह युद्धायागमनं ॥ ३ ॥ ]

[श्रीशुक उवाच—
हत्वा नरकमत्युग्रं दानवं दानवान्तकः ।
आरुह्य गरुडं प्रायात्प्राग्ज्योतिषपुरान्नृप ॥ १ ॥
स गच्छन्गगने विष्णुर्वन्दितुं देवमातरम् ।
जगाम त्रिदशावासं सहितः सत्यभामया ॥ २ ॥
स्वर्गद्वारं गतो विष्णुर्दध्मौ शङ्खं महास्वनम् ।
उपजग्मुस्तदाकर्ण्य साध्यपाद्या दिवौकसः ॥३॥
पूजितस्तैः सुरैः कृष्णो भक्तिनम्रैर्गतज्वरैः ।
सुरेन्द्रभवनं दिव्यं प्रविवेश मनोरमम् ॥ ४ ॥
तत्र शक्रः समं शच्या पूजयामास केशवम् ।
रत्नैराभरणैर्दिव्यैर्गन्धमाल्यैश्च शोभनैः ॥ ५ ॥
ततः प्रायात्पुरीं मातुरदित्याः सह भार्यया ।
दृष्ट्वोपतस्थे तं देवी पुत्रमायान्तमच्युतम् ॥ ६ ॥
ववन्दे तां हरिस्तं सा पूजयामास भामिनी ।
आशीर्भिः परमप्रीता चिरं दृष्टं यदूत्तमम् ॥७॥
सत्यभामाऽपि कौरव्य श्वश्र्वाः कृष्णेन चोदिता ।
पादयोः कुण्डले तस्या निधाय प्रणनाम वै ॥८॥
स्नुषामाश्लिष्य सन्तुष्टा सा पुनर्लब्धकुण्डला ।
आनन्दबाष्पप्रचुरा प्राहेदं कश्यपप्रिया ॥ ९ ॥
न ते जरा न वैरूप्यं कान्तेन सह विप्रियम् ।
भूयात्कल्याणि सुव्यक्तं मत्प्रसादात्कदाचन १०
ततोऽनुज्ञाप्य तां देवीं त्रिदशानपि केशवः ।
आरुह्य प्रययौ तार्क्ष्यं सहितः सत्यभामया ॥११
महात्मना गगने देवदेव्यौ
गरुत्मता नीयमानौ विचित्रम् ।
अपश्यतां नन्दनं चारु गुप्तं
शचीभर्तुर्दयितं हृद्यगन्धम् ॥ १२ ॥
वनं दृष्ट्वा दिव्यगन्धं सुपुष्पं
कृष्णं सत्या प्राह पाणौ गृहीत्वा ।
प्रविश्यास्मिन्साधु चित्रं विहर्तुं
मुहूर्तं मे काम्यते केशवेति ॥ १३ ॥
अथावरुह्य गरुडात्तस्या वचनगौरवात् ।
प्रविवेश वनं कृष्णः पालितं शक्रकिङ्करैः ॥१४॥
तत्रापश्यत्तरून्दिव्यान्मत्तसारङ्गनादितान् ।
फलभारनतान्भूरिप्रसूनरजसा वृतान् ॥ १५ ॥
चलत्किसलयोपेतान्विहङ्गध्वनिशोभितान् ।
विचरन्ती तथा तत्र पारिजातं महाद्रुमम् ॥१६॥

१ वीर० धाम २ वीर० गार्हमेधिकां । ३ वीर० श्लोकद्वयमधिकं ।

१ वीर० ऽविरह । २ वीर० केशप्रसाधशयन । ३ वीर० हारै । ४ विज० चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥ ५ विज० एतदनन्तरं त्रयोऽध्याया अधिका दृश्यन्ते ।

दृष्ट्वा पप्रच्छ गोविन्दं विस्मयाकुललोचना ।
को नामायं तरुर्देव विचित्रो भुवनत्रये ॥ १७ ॥
सत्यमेतस्य वृक्षस्य कृतार्थाः फलभागिनः ।
प्रवालमूलो विपुलो जातरूपमहातनुः ॥ १८ ॥
इन्द्रनीलच्छदच्छन्नो लसद्वैदूर्यवेदिकः ।
माणिक्यपुष्पो विविधमुक्ताफलफलान्वितः ॥१९
गोमेदपक्वप्रकरो वज्रकिञ्जल्करञ्जितः ।
स्फुरन्मरकतस्थूलशाखाशतविराजितः ॥ २० ॥
तरुरेष जगन्नाथ मनो मे हरते भृशम् ।
नेतव्योयं पुरीं वृक्षो यद्यहं ते प्रिया प्रभो ॥२१॥
छायायामुपविष्टां मामन्यपत्न्यस्तवानघ ।
दृष्ट्वा मंस्यन्ति दयितां सर्वाभ्यो मां तवाच्युत२२
इत्युक्तो देवकीपुत्रः सत्यया प्रियकान्तया ।
प्राह नायं तरुर्भद्रे नेतव्यो नन्दनाद्वनात् ॥२३॥
पुरा क्षीरांबुधेर्जातो मथ्यमानात्सुरासुरैः ।
शक्राय दत्तः सकलैः सदा तत्फलभोक्तृभिः २४
तन्नाहार्यमनादृत्य मया मित्रं शतक्रतुम् ।
तरुरत्नं सरोजाक्षि धर्ममेवानुतिष्ठता ॥ २५ ॥
नीयमाने च वृक्षेऽस्मिन्पारिजाते शुचिस्मिते ।
सङ्ग्रामो जायते घोरस्त्रिदशैर्जयकाङ्क्षिभिः ॥२६॥
इत्युक्ता देवदेवेन सत्यभामा पुनर्हरिम् ।
प्राह भीषयसे किं मां व्यलीकैः कंसमर्दन ॥२७॥
नाभ्यनन्दद्दुराचारा शची मां गृहमागताम् ।
हेतुर्हि वृक्षस्तस्यायं भर्तृपौरुषगर्विता ॥ २८ ॥
नेतव्यः सर्वथा वृक्षः पारिजातोऽयमच्युत ।
प्रियाहं तव चेन्नाथ नो चेद्विरम सांप्रतम् ॥२९॥
इत्युक्तः सत्यया कृष्णस्ताननादृत्य रक्षकान् ।
उत्पाट्यारोपयामास पारिजातं गरुत्मति ॥ ३० ॥
ततो निवारयामासुर्गोविन्दं वनपालकाः ।
केचिद्द्रुततरं जग्मुर्देवेन्द्राय निवेदितुम् ॥ ३१ ॥
कृष्णकृष्ण न हर्तव्यस्तरुरेषोऽमरार्चितः ।
हरसे यदि तस्य त्वं फलं सद्योनुभोक्ष्यसि ॥३२॥
प्राप्नोषि न पुरीं कृष्ण सहानेन महीरुहा ।
सद्यः पश्यसि देवेन्द्रं पृष्ठतोऽभ्युद्यतायुधम् ॥३३॥
सुरेन्द्रान्तिकमासाद्य द्रुतं ते वनरक्षकाः ।
उपविष्टं समं शच्या शक्रं दृष्ट्वाऽब्रुवन्नृप ॥३४॥

**वनरक्षका ऊचुः—**

अवज्ञायाखिलान्देवानिन्द्राणीं च त्वया सह ।
जहार कृष्णदयिता पारिजातं महाद्रुमम् ॥३५॥
उक्ताऽस्माभिर्भृशं देव वारयद्भिर्हरिप्रिया ।
उपालभ्याहरद्वृक्षं भर्तृपौरुषगर्विता ॥ ३६ ॥

**श्रीशुक उवाच—**

इत्याकर्ण्याप्रियं शक्रो दण्डाहत इवोरगः ।
शचीं विलोक्य पार्श्वस्थां नामृष्यत्तत्पराभवम्३७
सन्नाहोद्योगमाघोष्य सन्निपात्य च सैनिकान् ।
लोकपालान्समाहूय निश्चक्राम सुरेश्वरः ॥३८॥
ऐरावतं चतुर्दन्तमारुह्य वरवारणम् ।
गृहीतवज्रं गच्छन्तमनुजग्मुर्दिवौकसः ॥ ३९ ॥
वैश्वानरस्तु तुरगमारुह्य दृढदंशितः ।
घोरां शतघ्नीमादाय स्रुवपुच्छां ययौ रणम् ॥४०॥
यमस्त्वारुह्य महिषं दण्डमादाय वीर्यवान् ।
मृत्युकालादिभिर्युक्तो युद्धार्थी शक्रमन्वगात् ४१
निर्ऋतिश्च महातेजा घोरमारुह्य पौरुषम् ।
असिहस्तो महाबाहुर्युद्धाय प्रययौ नृप ॥ ४२ ॥
मकरं भीषणाकारमारुह्य वरुणस्त्वरन् ।
पाशोद्यतकरः प्रायाद्युद्धायानु शचीपतिम् ॥४३॥
वायुः कृष्णमृगारूढो दंशितस्तोमरायुधः ।
सुरेश्वरमनुप्रायाद्योद्धुं चक्रभृता सह ॥ ४४ ॥
ऊढां चतुर्भिः पुरुषैः शिविकां नरवाहनः ।
योद्धुकामस्त्वरन्प्रायाद्विष्णुना मुद्गरायुधः ॥४५॥
ईशानो वृषभं तुङ्गमारुह्य शितशूलभृत् ।
वासवेन समं प्रायाद्भूतकोटिसमन्वितः ॥ ४६ ॥
भेरीशङ्खमृदङ्गैश्च पणवानकगोमुखैः ।
सुवर्णसुषिरैर्दिव्यैः कांस्यतालैश्च भूरिभिः ॥४७॥
रथनेमिनिनादैश्च हयानां खुरनिःस्वनैः ।
क्ष्वेलितास्फोटितैर्घोरैः सङ्ग्रामाह्वानगर्जनैः ॥४८॥
तिष्ठतिष्ठेति मा याहि क्व यासीति पुनःपुनः ।
प्रवदद्भिः सुरगणैः शतशोथ सहस्रशः ॥ ४९ ॥

कंपयद्भिश्च शस्त्रौघैः प्रेषयद्भिश्च वाहनम् ।
पुरोहमिति गच्छद्भिः शतशोथ सहस्रशः ॥५०॥
घोरैर्ज्याघातनिर्घोषैः सिंहनादैश्च भूरिभिः ।
अभिदुद्रुवुरुद्वृत्ताः सिंहं गोमायवो यथा ॥५१॥

विजयध्वजीयपाठे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## [ विजयध्वजीयपाठे षट्षष्टितमोऽध्यायः ॥ ६६ ॥ 66

सत्यभामया युद्धे कुबेरपराजयः ॥ १ ॥ श्रीकृष्णेन वरुणादीनां पराङ्मुखीकरणं ॥ २ ॥ ]

[श्रीशुक उवाच—
सुरानभिद्रुतान्दृष्ट्वा सत्यामाह जगत्पतिः ।
इमे प्राहुणिकाः प्राप्तास्तव वृन्दारका इति ॥ १ ॥
तथा ब्रुवाणे देवेशे प्रेषिता देवसैनिकाः ।
नदन्तो मुमुचुः कृष्णे शरवृष्टिं कुरूद्वह ॥ २ ॥
ततः शार्ङ्गं समादाय सत्या व्यसनविक्लबा ।
मुक्तांश्चिच्छेद बाणौघैस्तान्छरान्देवसैनिकैः ॥ ३ ॥
ततो वैश्रवणः श्रीमान् बहुभिर्गुह्यकैर्वृतः ।
विस्फारयंस्तालमात्रं कार्मुकं कनकाटविं ॥ ४ ॥
स्वर्णपुङ्खान् शरान् मुञ्चन्सिंहवद्व्यनदन्मुहुः ।
अभिदुद्राव समरे तिष्ठतिष्ठेति चाब्रवीत् ॥ ५ ॥
तैः पञ्चभिः शरैः सत्या निशितैर्मर्मभेदिभिः ।
अर्पयामास वेगेन विशाले जठरे नृप ॥ ६ ॥
सोतिविद्धो रणे बाणैस्त्रिभिर्भल्लैर्हरिप्रियाम् ।
अयोधयद्धनपतिः सिंहनादं व्यनीनदत् ॥ ७ ॥
तानप्राप्तानर्धचन्द्रैस्त्रिभिश्चिच्छेद सा शरैः ।
भूयोष्टभिः शरैर्देवी वत्सदन्तैर्मनोजवैः ॥ ८ ॥
विव्याध गुह्यकपतेर्ललाटे कुरुपुङ्गव ।
पीडितस्तैर्भृशं बाणैः पौलस्त्यः क्रोधविह्वलः॥९॥
संदधे निशितान्बाणानेकविंशति संयुगे ।
तानन्तरे सत्यभामा सायकैः सप्तभिर्नृप ॥ १० ॥
चिच्छेद निमिषार्धेन त्रिधैकैकं हरिप्रिया ।
सत्यभामा ततः क्रुद्धा पौलस्त्यस्य महद्धनुः ११
अर्धचन्द्रेण चिच्छेद मुष्टिदेशे द्विधा नृप ।
ततोन्यचापमादाय सज्यं कृत्वा धनेश्वरः ॥१२॥
ववर्ष शरजालानि क्रोधात्सर्प इव श्वसन् ।
सर्वांस्तान्सायकान्सङ्ख्ये शरैः सन्नतपर्वभिः॥१३॥
चिच्छेद लीलया देवी तदद्भुतमिवाभवत् ।
ततः क्रुद्धो वैश्रवणः सत्यभामां विलोक्य च १४
प्राह पश्य हनिष्यामि त्वामद्य मम पौरुषम् ।
इत्युक्त्वा तालमात्रे तु चापे गुह्यकसत्तमः ॥१५॥
पश्यतां सर्वदेवानां मार्ष्टुकामः पराभवम् ।
संदधे सूदितुं देवीमर्धचन्द्रं शरोत्तमम् ॥ १६ ॥
तदवेत्य मनस्तस्य क्षुरप्रेण हरिप्रिया ।
चिच्छेद कार्मुकं तस्य मुष्टिदेशे कुरूद्वह ॥ १७ ॥
ततो मुद्गरमादाय घोरं दानवभीषणम् ।
भ्रामयित्वा शतगुणं देव्यै चिक्षेप वित्तपः॥१८॥
तं मुद्गरं महाघोरमायान्तं कुरुपुङ्गव ।
वामेन पाणिना कृष्णो जग्राहोच्चैर्जहास च॥१९॥
ततो निवृत्तसंग्रामो विदुद्राव धनेश्वरः ।
शशंस देवीं कृष्णश्च समाश्लिष्याभिपूजयन्॥२०॥
पलायिते धनपतौ सङ्ग्रामे कंसवैरिणा ।
वरुणोऽभ्यद्रवत्कृष्णं पाशमुद्यम्य संयुगे ॥२१॥
तमायान्तमभिप्रेक्ष्य तार्क्ष्यो मकरवाहनम् ।
अभ्यद्रवन्महासत्वः शार्दूल इव गोवृषम् ॥ २२ ॥
तयोः समभवद्युद्धं घोरं तार्क्ष्यजलेशयोः ।
यथा देवासुरे युद्धे बलिवासवयोरिव ॥ २३ ॥
तत्र काश्यपपुत्रस्य कण्ठे पाशं जलेश्वरः ।
क्रुद्धश्चकर्ष विन्यस्य सिंहः सिंहमिवौजसा ॥२४॥
तं पक्षकोट्या गरुडः समुद्धृत्य जलेश्वरम् ।

पद्भ्यां गृहीत्वा मकरं चिक्षेप वरुणालये ॥ २५ ॥
कृच्छ्राद्गृहीतपाशस्तु वरुणो गतवाहनः ।
पदातिरेव संग्रामाद्विदुद्राव यथागतम् ॥ २६ ॥
तथागते वार्धिपतौ सङ्ग्रामे वायुपावकौ ।
सममेवाभ्यवर्तेतां गोविन्दं कुरुसत्तम ॥ २७ ॥
पावकः पञ्चभिर्बाणैर्मारुतश्च तथा त्रिभिः ।
आयोधयद्धृषीकेशं तदद्भुतमिवाभवत् ॥ २८ ॥
ततः प्रहस्य गोविन्दो बाणेनैकेन पावकम् ।
विव्याध सप्तभिश्चैव समीरणमरिन्दमः ॥ २९ ॥
एकेनाग्निः क्षुरप्रेण गाढं वक्षसि ताडितः ।
तमसाधारणं मत्वा विदुद्राव रणाद्द्रुतम् ॥ ३० ॥
दृष्ट्वा समीरणो युद्धादपयातं हुताशनम् ।
सायकाचितसर्वाङ्गमात्मानं चातिविह्वलः ॥३१॥
विदित्वा पुण्डरीकाक्षं सङ्ग्रामे प्रत्युपस्थितम् ।
न्यवर्तत कुरुश्रेष्ठ प्राणत्राणपरायणः ॥ ३२ ॥
ततो महिषमारुह्य दण्डमुद्यम्य भास्वरम् ।
कृष्णमभ्यद्रवद्युद्धे यमः क्रोधारुणेक्षणः ॥ ३३ ॥
तमुद्यतमहादण्डं दृष्ट्वा कमललोचनः ।
गदां विसृज्य तद्धस्तात्पातयामास भूतले ॥३४॥
गदया ताडिते दण्डे त्रस्तहस्तः परेतराट् ।
विदुद्राव परावृत्य महिषेण कुरूद्वह ॥ ३५ ॥
वैवस्वतं गतं दृष्ट्वा निर्ऋतिर्भयविह्वलः ।
नाभ्यवर्तत गोविन्दं योद्धुं विदिततद्बलः ॥३६॥
शङ्करस्तु महातेजास्त्रिशूली वृषवाहनः ।
अनेकभूतसङ्घातैः कृष्णमभ्यद्रवद्रणे ॥ ३७ ॥
तावुभौ लोकविख्यातौ बलिनौ वीर्यशालिनौ ।
चक्राते कदनं घोरं परस्परजयैषिणौ ॥ ३८ ॥
ईशानो दशभिर्बाणैः कृष्णं तार्क्ष्यं च पञ्चभिः ।
विव्याध समरे राजन् तिष्ठतिष्ठेति चावदत् ॥३९
ततः शार्ङ्गं समादाय कृष्णः परपुरञ्जयः ।
त्रिंशद्भिर्युगपद्बाणैर्विव्याध वृषवाहनम् ॥ ४० ॥
गरुडः पन्नगरिपुः पद्भ्यां द्वाभ्यां च संयुगे ।
पक्षाभ्यां चञ्चुकोट्या च मर्दयामास तं वृषम् ४१
भूयोऽपि कृष्णो नाराचैः पञ्चाशत्प्रमितैर्नृप
योधयामास समरे शङ्करं लोकशङ्करम् ॥ ४२ ॥
ततस्त्रिशूलमाविध्य निशितं घोरदर्शनम् ।
प्राहिणोद्वासुदेवाय कुपितो धूर्जटिर्नृपः ॥ ४३ ॥
दृष्ट्वा त्रिशूलमायान्तं केशवस्तं निवारितुम् ।
गदां कौमोदकीं गुर्वीं प्राहिणोद्दैत्यमर्दनीम् ४४
ते वै कौमोदकीशूले कृत्वा नभसि सङ्गरम् ।
ज्वलमाने महाघोरे पेततुः सममंबुधौ ॥ ४५ ॥
निपात्याब्धौ त्रिशूलं तद्गदा कौमोदकी पुनः ।
आससाद करं विष्णोस्त्रिशूलमपि शूलिनः ॥४६॥
तत उद्यम्य निशितं खड्गं पन्नगभूषणः ।
कृष्णमभ्यद्रवत्सङ्ख्ये पार्ष्णिभ्यां चोदयन्वृषम् ४७
तूर्णं गृहीत्वा बाहुभ्यां विषाणे तस्य नन्दिनः ।
स शूलपाणिं चिक्षेप वैनतेयो धनुश्शतम् ॥४८॥
ततो विसृज्य सङ्ग्रामं त्रिशूली वृषवाहनः ।
प्रमथैः सहितः प्रायात्कुरुश्रेष्ठ यथागतम् ॥४९॥

विजयध्वजीयपाठे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## [ विजयध्वजीयपाठे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ 67

श्रीकृष्णेन महेन्द्रपराजयः ॥ १ ॥ इन्द्रेण श्रीकृष्णसत्यभामयोः सान्त्वनं ॥ २ ॥ श्रीकृष्णस्य द्वारकागमनं ] ॥ ३ ॥ सत्यभामायाः गृहप्राङ्गणे पारिजाततरुस्थापनं ॥ ४ ॥

**श्रीशुक उवाच—**

ततः स्वयं देवपतिस्तुङ्गमारुह्य वारणम्
किरीटी बद्धतूणीरः प्रगृहीतशरासनः ॥ १ ॥
अभ्यद्रवद्रणे कृष्णं गजः केसरिणं यथा ।

पारिजातकृते राजन्पौलोम्या वचनं स्मरन् ॥२॥
तमायान्तमभिप्रेक्ष्य हरिः परपुरञ्जयः ।
शङ्खं दध्मौ महानादं दिशः समभिपूरयन् ॥ ३ ॥
तमभिद्रुत्य देवेन्द्रो महद्विस्फारयन्धनुः ।
क्षुरप्रेण सुतीक्ष्णेन कृष्णं विव्याध सङ्गरे ॥ ४ ॥
हरिर्विद्धः क्षुरप्रेण देवराजेन वक्षसि ।
प्रहस्य साधु शक्रोसि युक्तं त इति चाब्रवीत्॥५॥
भूयोऽपि बाणान्दश देवराजः
सन्धाय चापे भुजगेन्द्रकल्पे ।
आकर्णपूर्णं विनिकृष्य कृष्णे
मुमोच चक्रे स ह सिंहनादम् ॥ ६ ॥
तानन्तरे कंसरिपुर्महात्मा
छित्त्वा त्रिधैकेन शरेण बाणान् ।
विव्याध बाणैर्दशभिः सुधौतैः
पुरन्दरं भारत लीलयैव ॥ ७ ॥
ते शरा देवराजस्य गात्रं निर्भिद्य सावृति ।
शोणिताक्ताः प्रदृश्यन्ते भूयो वेगेन निर्गताः ॥८
पुनश्च शक्रः कोदण्डे शरान्सन्धाय षोडश ।
मुमोचाकृष्य गोविन्दस्तांश्चकर्त शरैस्त्रिभिः ॥९॥
भूयोऽपि बाणैस्त्रिंशद्भिः सुरराजानमाहवे ।
आयोधयद्धरिस्ते च ममज्जुः शक्रवक्षसि ॥ १० ॥
ततश्चुकोप देवेन्द्रो दण्डाहत इवोरगः ।
प्रेषयामास तोत्रेण तार्क्ष्यं प्रति महागजम् ॥११॥
स गजः प्राप्य गरुडं पाकशासनचोदितः ।
चतुर्भिर्घटयामास दन्तैर्बाहुयुगान्तरे ॥ १२ ॥
ततस्तुण्डेन गरुडः पक्षाभ्यां च तथा नखैः ।
अर्दयामास कौरव्य गजमैरावताह्वयम् ॥ १३ ॥
शक्रस्तु वज्रमुद्यम्य घोरं दानवभूषणम् ।
पश्यतां सर्वभूतानां प्रजहार वृषाकपिम् ॥ १४ ॥
तमागतं मधुरिपुर्वज्रं दुश्च्यवनायुधम् ।
वामेन पाणिना विष्णुर्जग्राह प्रजहास च ॥१५॥
निरायुधः सुरपतिर्गरुडार्दितवाहनः ।
व्यावर्तत रणाद्राजन् व्रीडावनतकन्धरः ॥१६॥
तं दृष्ट्वा भ्रष्टसंकल्पं पलायनपरायणम् ।
सत्यभामा सुरपतिं प्रहसन्तीदमब्रवीत् ॥ १७ ॥

सत्यभामोवाच—
एहि शक्र निवर्तस्व मा याहि कुलिशायुध ।
पलायनमयुक्तं हि पौलोम्या वल्लभस्य ते ॥१८॥
ऐश्वर्यमत्ता पौलोमी भर्तृपौरुषगर्विता ।
अवमंस्यति सद्यस्त्वां भार्या रणपराजितम् ॥१९॥
इत्थं देव्या गिरं शक्रः सोपालंभमुदीरिताम् ।
निशम्याभिमुखो भूत्वा प्राह देवीं शुचिस्मितां २०

इन्द्र उवाच-
यन्नामरासुरमहोरगयक्षसिद्धा
गन्धर्वकिन्नरपिशाचनिशाचराद्याः ।
सृष्टास्त्रिलोकगुरुणा रणमूर्ध्नि तेन
को वा न याति परिभूतिमलं विरुध्य ॥ २१ ॥
वत्सो यथा तनुबलः सकृदेत्य मात-
र्यूधस्यपानसमये कुरुते विरोधम् ।
तद्वद्वयं च निजशैशवमप्रमेये
नाथे विरुध्य पिशिताशनि दर्शयाम ॥ २२ ॥
इति सत्राजितः पुत्रीमुक्त्वा भारतसत्तम ।
कृताञ्जलिः प्रणम्याह वासुदेवं पुरन्दरः ॥२३

इन्द्र उवाच—
नमस्ते देवदेवेश पुण्डरीकाक्ष माधव ।
क्षमस्व मत्कृतं विश्वमपराधं जगत्पते ॥ २४ ॥
न मां त्वदेकशरणं शरणागतवत्सल ।
भूरिबालिशमक्षान्तं परित्यक्तुं त्वमर्हसि ॥ २५
ऐरावतश्च कुलिशं पारिजातश्च पादपः ।
देवराज्यं च भगवन्नियं चाप्यमरावती ॥ २६
त्वदधीनमिदं विश्वमहमाज्ञाकरस्तव ।
अत्र यद्रोचते नेतुं नीयतां तद्यथेच्छया ॥२७॥
किंतु वक्ष्यामि गोविन्द मूलं त्वयि विरुध्यतः
रमसे मानुषे लोके भगवंस्त्वमनन्यधीः ॥ २८
तत्र नीते पारिजाते भवता कल्पपादपे ।
तेन सा जायते स्वर्गान्निर्विशेषा वसुन्धरा ॥२९
तेनाहं यदुशार्दूल विरोधं कृतवांस्त्वयि ।
तत्क्षन्तव्यं त्वया देव कार्याकार्यं विजानता ३

श्रीशुक उवाच—
इत्युक्तो देवराजेन देवदेवो जनार्दनः ।

पुरन्दरं कुरुश्रेष्ठ प्राह प्रहसिताननः ॥ ३१ ॥
**श्रीभगवानुवाच—**
अपराधस्त्वया शक्र न कश्चिदपि चेष्टितः ।
यत्कृतं तन्मयैवागस्त्वभेदादावयोः परम् ॥ ३२॥
यत्त्वयाद्य सहस्राक्ष चेष्टितं साध्वसाधु वा ।
मयैव तत्कृतं सर्वं नात्र कार्या विचारणा ॥३३॥
पारिजातस्तरुश्रेष्ठो मय्यारूढे तरुर्दिवम् ।
मन्निदेशात्सहस्राक्ष स्वयमेष्यति नन्दनम् ॥३४॥
इत्युक्तो वासुदेवेन देवराजः कुरूद्वह ।
गोविन्दं सत्यभामां च प्रसाद्य गरुडं तथा॥३५॥
पुत्रो मे रक्षितव्यस्ते श्यालो बीभत्सुरित्यपि ।
भूयोभूयः प्रार्थयित्वा कृतानुज्ञः पुरन्दरः ॥३६॥
सार्धं सकलदिक्पालैर्लब्धवज्रः पुरं ययौ ।
पुरन्दरं सदिक्पालं विसृज्य यदुनन्दनः॥ ३७ ॥
गरुडं प्राह कौरव्य यास्यामो द्वारकामिति ।
गोविन्दं सत्यभामां च पारिजातं च पादपम् ३८
गरुडः पन्नगरिपुर्लीलयैव वहन्ययौ ।
संप्रविश्य पुरीं रम्यां द्वारतोरणभूषिताम् ॥३९॥
पताकामालिनीं दिव्यां सिक्तसंमृष्टभूतलाम् ।
ऊढोपायनतांबूलस्रग्गन्धकलमाक्षतैः ॥ ४० ॥
उपस्थितैर्यदुश्रेष्ठैः पूजितश्चाभिवन्दितः ।
तूर्यमङ्गलनिर्घोषैर्वेदस्वाध्यायनिःस्वनैः ॥ ४१ ॥
प्रविवेश सभां दिव्यां सुधर्मां वृद्धसेविताम् ।
आहुकं वसुदेवं च बलभद्रं तथाऽग्रजम् ॥ ४२॥
अभिवाद्य यथान्यायं पूजितस्तैर्यथोचितम् ।
उपविष्टः सभामध्ये काञ्चने परमासने ॥ ४३॥
रराज राजशार्दूल बृहस्पतिपुरोगमैः ।
लोकपालैरुपासीनैर्दिवि वज्रधरो यथा॥ ४४ ॥
प्राङ्गणे सत्यभामायाः पारिजातं महाद्रुमम् ।
स्थापयामास गोविन्दः सर्वतो मणिकुट्टिमे॥४५॥
आयान्तं देवकीपुत्रं योषित्सार्थेन भूरिणा ।
श्रुत्वा द्रष्टुमुपाजग्मुः सकला यादवस्त्रियः ॥४६॥
वसुदेवस्तु कौरव्य रोहिण्याद्याः स्त्रियोऽखिलाः ।
आजग्मुः केशवं द्रष्टुं जितशत्रुमनामयम् ॥४७॥
स दृष्ट्वा मातरो विष्णुर्देवक्या सह संगताः ।
चक्रे प्रणाममाशीर्भिस्ताश्च तं प्रत्यपूजयन् ॥४८॥
रुक्मिण्याद्यास्तथा सप्त महिष्यः कृष्णवल्लभाः ।
प्रणेमुर्देवमभ्येत्य दिव्यरूपाः स्वलङ्कृताः ॥४९॥
रेवती रामदयिता त्रिवक्रा च यशस्विनी ।
एकानङ्गा च तन्वङ्गी चित्रा च वरवर्णिनी॥५०॥
अन्याश्च कुरुशार्दूल भोजवृष्ण्यन्धकस्त्रियः ।
आनीतप्रमदासार्थं जितशत्रुमनामयम् ॥ ५१ ॥
गोविन्दं सत्यभामां चाप्यानीतममरद्रुमम् ।
प्रीत्युत्फुल्लमुखाः सर्वे कौतुकाद्द्रष्टुमीययुः ॥५२॥
तं समेता यथाजोषं लाजप्रसवतण्डुलैः ।
स्पृष्ट्वा मूर्ध्नि मुकुन्दस्य जग्मुः स्वंस्वं निवेशनम्५३

विजयध्वजीयपाठे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ]

## षष्टितमोऽध्यायः ॥ ~~६०~~ ॥ 7.

श्रीकृष्णरुक्मिण्योः प्रेमकलहः ॥ १ ॥

[राज्ञो[1]
सर्वासां महिषीणां तु गोविन्दासक्तचेतसाम् ।
मय्येव प्रेमवान्विष्णुरिति निश्चितचेतसाम् ॥१॥
समः सर्वासु वा कृष्ण एकस्यां प्रेमवानुत ।
तन्मे त्वं शंस तच्छ्रोतुं रतिरस्ति मम प्रभो ॥२॥
**श्रीशुक उवाच—**
महिषीणां तु सर्वासां प्रथमा भीष्मनन्दना ।
प्रेमवानधिकं तस्यामिति प्रख्यातिरूर्जिता ॥३॥

१ विज०अयमध्यायः७५ तमतया वर्तते । तत्रादौ कुण्डलिता एते चत्वारः श्लोकाश्चाधिकाः ।

कदाचित्प्रेमकलहः केशवेन तया समम् ।
कृतस्तच्छृणु कौरव्य कार्त्स्न्येन कथयामि ते॥४॥]
**श्रीशुक उवाच—**
कर्हिचित्सुखमासीनं स्वतल्पस्थं जगद्गुरुम् ।
पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः ॥ १ ॥
यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः ।
स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः॥२॥
तस्मिन्नन्तर्गृहे भ्राजन्मुक्तादामविलंबिना ।
विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ३ ॥
मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते ।
जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽमलैः ॥ ४ ॥
पारिजातवनामोदवायुनोद्यानशालिना ।
धूपैरगुरुजै राजञ्जालरन्ध्रविनिर्गतैः ॥ ५ ॥
पयःफेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे ।
उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥ ६ ॥
वालव्यजनमादाय रत्नदण्डं सखीकरात् ।
तेन वीजयती देवी उपासाञ्चक्र ईश्वरम् ॥ ७ ॥
सोपाच्युतं क्वणयती मणिनूपुराभ्यां
रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ।
वस्त्रान्तगूढकुचकुङ्कुमशोणहार-
भासा नितंबधृतया च परार्ध्यकाञ्च्या ॥ ८ ॥
तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य
या लीलया धृततनोरनुरूपरूपा ।
प्रीतः स्मयन्नलककुण्डलनिष्ककण्ठ-
वक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥ ९ ॥
**श्रीभगवानुवाच—**
राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः ।
महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥१०॥
तान्प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान् ।
दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान्॥
राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान् ।
बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥१२॥
अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम् ।
ताः पदवीं सुभ्रूः प्रायः सीदन्ति योषितः॥
निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः ।
तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे१४
ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ।
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् १५
वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया ।
वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा१६
अथाऽऽत्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् ।
येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे॥१७॥
चैद्यशाल्वजरासन्धदन्तवक्त्रादयो नृपाः ।
मम द्विषन्ति वामोरु रुक्मी चापि तवाग्रजः १८
तेषां वीर्यमदान्धानां दृप्तानां स्मयनुत्तये ।
आनीताऽसि मया भद्रे तेजोऽपहरताऽसताम् १९
उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः ।
आत्मलब्ध्याऽऽस्महे पूर्णा गेहयोर्ज्योतिरक्रियाः॥
**श्रीशुक उवाच—**
एतावदुक्त्वा भगवानात्मानं वल्लभामिव ।
मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमत् ॥ २१ ॥
इति त्रिलोकेशपतेस्तदाऽऽत्मनः
प्रियस्य देव्यश्रुतपूर्वमप्रियम् ।
आश्रुत्य भीता हृदि जातवेपथु-
श्चिन्तां दुरन्तां रुदती जगाम ह ॥ २२ ॥
पदा सुजातेन नखारुणश्रिया
भुवं लिखन्त्यश्रुभिरञ्जनासितैः ।
आसिञ्चती कुङ्कुमरूषितौ स्तनौ
तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३ ॥
तस्याः सुदुःखभयशोकविनष्टबुद्धे-
र्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ।
देहश्च विक्लवधियः सहसैव मुह्य-

१ विज० य एत। २ वीर० धूपैः। विज० दिव्यै। ३ उभ० नादितैः। ४ उभ० ऽरुणैः। ५ वीर० शोभिना। ६ विज० रागरवै। ७ विज० तां रुक्मिणीं। ८ वीर० भूयांश्चैवा। ९ वीर० न्न ववृषे समान्। विज० देववृषोपमान्।

१ वीर० भवेत्। २ विज० द्विषन्ति मां वरारोहे। ३ वीर० तन्वि। विज० ह्यद्धा। ४ विज० नेहात्मसदृशाः क्रियाः। ५ वीर० त्रिलोकाधिपते। ६ वीर० रञ्जनाविलैः। ७ विज० विभ्यद्रंभेव वायु।

त्रंभेव वायुविहता प्रविकीर्य केशान् ॥ २४ ॥
तद्दृष्ट्वा भगवान्कृष्णः प्रियायाः प्रेमबन्धनम् ।
हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकंपत ॥२५
पर्यङ्कादवरुह्याशु तामुत्थाप्य चतुर्भुजः ।
केशान्समुह्य तद्वक्त्रं प्रामृजत्पद्मपाणिना ॥ २६ ॥
प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा ।
आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् २७
सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः ।
हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥ २८ ॥
श्रीभगवानुवाच—
मामा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् ।
त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने ॥ २९ ॥
मुखं च प्रेमसंरंभस्फुरिताधरमीक्षितुम् ।
कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम् ॥ ३० ॥
अयं हि परमो लाभो गृहेषु गृहमेधिनाम्
यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि ॥३१॥
श्रीशुक उवाच—
सैवं भगवता राजन्वैदर्भी परिसान्त्विता ।
ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ॥३२॥
बभाष ऋषभं पुंसां वीक्षन्ती भगवन्मुखम् ।
सव्रीडहासरुचिरस्निग्धापाङ्गेन भारत ॥ ३३ ॥
रुक्मिण्युवाच—
नन्वेवमेतदरविन्दविलोचनाऽऽह
यद्वै भवान्भगवतोऽसदृशी विभूम्नः ।
क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः
क्वाऽहं गुणप्रकृतिरज्ञगृहीतपादा ॥ ३४ ॥
सत्यं भयादिव गुणेभ्य उरुक्रमान्तः
शेते समुद्र उपलंभनमात्र आत्मा ।
नित्यं कदिन्द्रियगणैः कृतविग्रहस्त्वं
त्वत्सेवकैर्नृप पदं विधुतं तमोन्धम् ॥ ३५ ॥
त्वत्पादपद्ममकरन्दजुषां मुनीनां
वर्त्मास्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ।
यस्मादलौकिकमिवेहितमीश्वरस्य
भूमंस्तवेहितमथो अनु ये भवन्तम् ॥ ३६ ॥
निष्किञ्चनो ननु भवान्न यतोऽस्ति किञ्चि-
द्यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।
न त्वा विदन्त्यसुतृपोन्तकमाढ्यतान्धाः
प्रेष्ठो भवान्बलिभुजामपि तेऽपि तुभ्यम् ॥ ३७॥
त्वं वै समस्तपुरुषार्थमयः फलात्मा
यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम् ।
तेषां विभो समुचितो भवतः समाजः
पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥ ३८॥
त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव
आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि ।
हित्वा भवद्भ्रुव उदीरितकालवेग-
ध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ॥ ३९ ॥
जाड्यं वचस्तव गदाग्रज यस्तु भूपा-
न्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ।
सिंहो यथा स्वबलिमीश पशून्स्वभागं
तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ॥ ४० ॥
यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्य-
जायन्तनाहुषगयादय ऐकपत्यम् ।
राज्यं विसृज्य विविशुर्वनमंबुजाक्ष
सीदन्ति तेऽनुपदवीं त इहास्थिताः किम् ॥४१॥
कान्यं श्रयेत तव पादसरोजगन्ध-
माघ्राय सन्मुखरितं जनताऽपवर्गम् ।
लक्ष्म्यालयं त्वविगणय्य गुणालयस्य

१ उभ० हास्यप्रौढेर्भ्रम । २ विज० क्ष्वेलाचरित । ३ विज० भाषिणि । ४ उभ० भवान्न भवतः । ५ विज० सदृशो । ६ विज० रन्यगृहीत । ७ उभ०

१ विज० वर्त्म स्फुटं । २ वीर० भूमंस्तवे । ३ विज० अनु मे भवन्ति । ४ विज० तृपोन्तिक । ५ विज० प्रेष्ठः सतां बलिभुजामपि योन्तरात्से । ६ विज० समुदितो भवतः प्रसादस्त्वय्यां च यश्च रतयोः सुखदुःखिनोर्न । ७ विज० मुक्त्वा भवद्भ्रुवदुदीरित । वीर० हित्वा भवद्भ्रुव उदीरित । ८ विज० कालगन्ध । ९ विज० कुतोन्यान् । १० विज० सत्यं वच । ११ विज० यश्च । १२ वीर० स्वबलिमाशु । १३ विज० तेनु पदवीं । १४ वीर० कान्यं श्रयीत । विज० का स्त्री वृणीत । १५ विज० गुणालयाढ्य

मर्त्यो[1] सदोरुभयमर्थविविक्तदृष्टिः[2] ॥ ४२ ॥
त्वं त्वाऽनुरूपमभजं जगतामधीश-
मात्मानमत्र च परत्र च कामपूरम्[3] ।
स्यान्मे तवाङ्घ्रिररणं[4] स्रुतिभिर्भ्रमन्त्या
यो वै[5] भजन्तमुपयात्यनृतापवर्गः ॥ ४३ ॥
तस्याः[6] स्युरच्युत नृपा भवतोपदिष्टाः
स्त्रीणां[7] गृहेषु खरगोश्वविडालभृत्याः
यत्कर्णमूलमरिकर्शन नोपयाया-
द्युष्मत्कथा मृडविरिञ्चसभासु गीता ॥ ४४ ॥
त्वक्श्मश्रुरोमनखकेशपिनद्धमन्त-

या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४५ ॥
अस्त्वंबुजाक्ष[9] मम ते चरणानुराग
आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः ।
यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो
मामीक्षसे तदुह नः परमाऽनुकंपा ॥ ४६ ॥
नैवालीकमहं[10] मन्ये वचस्ते मधुसूदन
अंबाया इव हि प्रायः कन्यायाः[11] स्याद्रतिः क्वचित्
व्यूढायाश्चापि[12] पुंश्चल्या मनोऽभ्येति नवंनवम् ।
बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः ॥४८॥

**श्रीभगवानुवाच—**

साध्व्येतच्छ्रोतुकामैस्त्वं[13] राजपुत्रि प्रलंभिता ।
मयोदितं यदन्वात्थ[14] सर्वं तत्सत्यमेव हि ॥४९॥
यान्यान्[15]कामयसे कामान्[16]मय्यकामाय भामिनि ।
सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ५०

१ वीर० मर्त्यं सदोरु । विज० मर्त्याशिपोरु । २ विज० विवेकदृष्टिः । ३ विज० कामरूपं । ४ विज० शरणं श्रुतिभि । ५ विज० ये वै भजन्त्युत यान्त्यनृतापवर्गम् । ६ विज० कस्याः । ७ विज० कृमिविड्भरितान्त्रवीतं । ८ विज० काममति । ९ विज० अस्त्यंबुजाक्ष । १० विज० लीकं भरत्येव । ११ विज० कन्यावादरतिः । १२ वीर० ऊढायाश्चापि । विज० मूढायाश्चापि । १३ वीर० कामेन । १४ विज० यदन्वर्थं सर्वं । १५ विज० यं यं । १६ विज० कामं मयि कामाय कामिनि ।

उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ।
यद्वाक्यैश्चाल्यमानाया[1] न धीर्मय्यपकर्षिता ॥५१॥
ये मां भजन्ति दांपत्ये तपसा व्रतचर्यया ।
कामात्मानोऽपवर्गेशं मोहिता मम मायया ॥५२॥
मां प्राप्य मानिन्यपवर्गसंपदं
वाञ्छन्ति ये संपद एव तत्पतिम्[2] ।
ते मन्दभाग्या निरयेऽपि ये नृणां[3]
मात्रात्मकत्वान्निरयः सुसङ्गमः ॥ ५३ ॥
दिष्ट्या गृहेश्वर्यसकृन्मयि[4] त्वया
कृताऽनुवृत्तिर्भवमोचनी खलैः
सुदुष्कराऽसौ सुतरां दुराशिषो
ह्यसुंभराया निकृतिंजुषः[5] स्त्रियाः ॥ ५४ ॥
न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु
पश्यामि मानिनि यया स्वविवाहकाले ।
प्राप्तान्नृपानवगणय्य मे
प्रस्थापितो द्विज उपश्रुतसत्कथस्य[7] ॥ ५५ ॥
भ्रातुर्विरूपकरणं युधि निर्जितस्य
प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ।
दुःखं समुत्थमसहोऽस्मदयोगभीत्या
नैवाब्रवीः किमपि तेन वयं जितास्ते[8] ॥ ५६ ॥
दूतस्त्वयाऽऽत्मलभने सुविविक्तमन्त्रः[9]
प्रस्थापितो मयि चिरायति शून्यमेतत् ।
मत्वा जिहास इदमङ्गमनन्ययोग्य
तिष्ठेत[11] तत्त्वयि वयं प्रतिनन्दयामः ॥ ५७ ॥

**श्रीशुक उवाच—**

एवं सौरतसंलापैर्भगवाञ्जगदीश्वरः[12] ।
स्वरतो रमया रेमे नरलोकं विडंबयन् ॥ ५८ ॥

१ विज० श्रोद्यमानाया । २ विज० सत्पतिं । ३ विज० ये स्युर्मात्रात्मकत्वान्निरये । ४ विज० श्वर्ययुते मयि । ५ विज० विकृतिं । ६ वीर० रहस्करो मे । विज० रहारहो । ७ विज० उपस्थित । ८ वीर० जिताः स्मः । ९ वीर० विभक्त । १० विज० जिहासुरिद । ११ विज० तत्त्वयि । १२ उभ० देवकीसुतः ।

तथाऽन्यासामपि विभुर्गृहेषु गृहवानिव । आस्थितो गृहमेधीयान्धर्माँल्लोकगुरुर्हरिः[1] ॥५९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे षष्टितमोऽध्यायः[3] ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥ 76

श्रीकृष्णस्य पुत्रपौत्रादिसन्ततिकथनं ॥ १ ॥ अनिरुद्धस्य विवाहः ॥ २ ॥ बलरामेण रुक्मिणो वधः ॥ ३ ॥

**श्रीशुक उवाच—**

एकैकशस्ताः कृष्णस्य पुत्रान्दशदशाबलाः ।
अजीजनन्ननवमान्पितुः सर्वात्मसंपदा ॥ १ ॥
गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् ।
प्रेष्ठं[2] न्यमंसत स्वं स्वं न तत्त्वविदः स्त्रियः ॥२॥
चार्वब्जकोशवदनायतबाहुनेत्र-[3]
सप्रेमहासरसवीक्षितवल्गुजल्पैः ।
संमोहिता भगवतो न मनो विजेतुं
स्वैर्विभ्रमैः समशकन्वनिता विभून्नः ॥ ३ ॥
[4]स्मायावलोकलवदर्शितभावहारि-
भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणै-
र्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥
[[5]यास्त्वीप्सितं स्वभवनेष्वधिरूढमुच्चै-
र्लक्ष्म्येकधाम सरसप्लुतवीक्षणेन ।
ऐक्षन्सतामपि पतिं च सतीः कटाक्षैः
स्थूणान्तरेण नवसङ्गमलज्जयैव ॥ १ ॥
रामा गृहे विहरतः पुरतः कराभ्यां
बद्धेक्षणाः स्वदयितस्य मुदा हसन्त्यः ।
गात्रान्तराण्यपिदधुर्निजपूरुषस्य
क्लेशावहान्यपि तदङ्गजभङ्गभीताः ॥ २ ॥]
इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।
भेजुर्मुदाऽविरतमेधितयाऽनुराग-
हासावलोकनवसङ्गमलालसाद्यम् ॥ ५ ॥
प्रत्युद्गमासनवरार्हणपादशौच-
तांबूलविश्रमणवीजनगन्धमाल्यैः ।
केशप्रसारशयनस्नपनोपहार्यै-
र्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ६ ॥
तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः ।
अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि[4] ते ॥७॥
चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् ।
सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥ ८ ॥
चारुचन्द्रो[5] विचारुश्च चारुश्च[6] दशमो हरेः ।
प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः[9] पितुः ॥९॥
भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ।
चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाऽष्टमः ॥१०॥
श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश ।
सांबः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥११॥
विजयश्चित्रकेतुश्च वसुमान् द्रविडः[8] क्रतुः ।
जांबवत्याः सुता ह्येते सांबाद्याः पितृसंमताः १२
वीरश्चन्द्रो[10]ऽश्वसेनश्च चित्रगुर्वेगवान्वृषः ।
आमः शङ्कुर्वसुः श्रीमान्कुन्तिर्[11]नाग्नजितेः सुताः १३
श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ।
शान्तिर्दर्शः पूर्णमासः कालिन्द्याः सोमकोऽवरः ॥

१ उभ० मपि स्त्रीणां । २ विज० आत्मतोऽमंसत प्रेष्ठं । ३ विज० चारुनेत्र । ४ वीर० स्मेरावलोक । ५ विज० श्लोकद्वयमधिकं । ६ विज० एतदादिश्लोकद्वयं नास्ति ।

१ विज० गुरुर्जुषन् । २ विज० पञ्चसप्ततितमोऽध्यायः ॥ ३ विज० षट्सप्ततितमोऽध्यायः ॥ ६७ ॥ ४ विज० गृणन्ति तान् । ५ उभ० चारुचन्द्रोऽतिचारुश्च । ६ विज० चारुमान्दशमो । ७ वीर० सदृशाः । ८ उभ० द्रविणः । ९ वीर० संनिभाः । १० उभ० भानुश्चन्द्रो । ११ वीर० न्हतिः । विज० कृतिः ।

प्र[1]घोषो गात्रवान्सिं[2]हो बलः प्रबल ऊर्ध्वगः ।
माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः॥
वृ[3]को हर्षोऽनिलो गृध्रो व[4]र्धनोऽन्नाद एव च ।
मही[5]शः पावनो वह्निर्मित्रविन्दात्मजाः क्षु[6]धिः १६
सङ्ग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित् ।
जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः १७
दीप्तिमांस्ताम्र[7]तप्ताद्या रोहिण्यास्तनया हरेः ।
प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महाबलः ॥१८॥
पुत्र्यां तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे ।
एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप ।
मातरः कृष्णजातानां सहस्राणि च षोडश ॥१९॥

**राजोवाच—**

कथं रुक्म्यरिपुत्राय प्रादाद्दुहितरं युधि ।
कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते ।
एतदाख्याहि मे विद्वन्द्विषो[8]र्वैवाहिकं मिथः २०
अनागतमतीतं च वर्तमानमतीन्द्रियम् ।
विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः २१

**श्रीशुक उवाच—**

वृ[9]तः स्वयंवरे साक्षादनङ्गोऽङ्ग[10]युतस्तया ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥२२॥
यद्यप्यनुसरन्वैरं रुक्मी कृष्णावमानितः ।
व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥२३॥
[तदेवा[11]नुसरन्वैरं रुक्मी कृष्णावमानितः ।
तोषयामास तपसा श्रीशैलनिलयं हरम् ॥ १ ॥
तपसाऽऽराधितो रुद्रो रुक्मिणा वरदर्षभः ।
वरेण च्छन्दयामास स च वव्रे दृढं धनुः ॥ २ ॥
अजेयं शत्रुसङ्घानामच्छेद्यं त्रिदशैरपि ।
तथेति कार्मुकं दत्त्वा वाक्यं चोवाच शङ्करः ॥३॥
यदा विरुद्ध्यसे विष्णौ तदेतत्कार्मुकं नृप ।
हित्वा तदा त्वां मामेव प्रतिपत्स्यीत नान्यथा ४
इत्युक्त्वा कार्मुकं दत्त्वा शङ्करो न व्यदृश्यत ।
सोपि लब्धवरो राजा प्राप्य भोजकटं पुरम् ॥५॥
तेन चापेन सकलान्नृपान्प्रख्यातपौरुषान् ।
वशे चकार सङ्ग्रामे रुक्मी कृष्णमृते नृप ॥ ६ ॥
विरोद्धुं वासुदेवेन रुक्मी नैवाकरोन्मनः ।
धनुर्लोभान्महाराज न मैत्रीमप्यकल्मषाम् ।
यद्यप्यनुसरन्वैरं गिरिशस्य स्मरन्वचः ॥ ७ ॥
वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥ ८ ॥
अनिरुद्धो रुक्मवत्यां तस्यां जज्ञे महारथः ।
जहार यं चित्रलेखा बाणपुत्र्या प्रचोदिता ।
सहस्रबाहुर्बाणश्च यत्कृते द्विभुजोऽभवत् ॥ ९ ॥]
रुक्मिण्यास्तनयां राजन्कृतवर्मसुतो बली ।
उपयेमे विशाला[1]क्षीं कन्यां चारुमतीं किल ॥२४॥
दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः ।
रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ।
जानन्नधर्मं त[2]योर्नं स्नेहपाशानुबन्धनः ॥ २५ ॥
तस्मिन्नभ्युदये राजन् रुक्मिणी रामकेशवौ ।
पुरं भोजकटं जग्मुः सां[3]बप्रद्युम्नकादयः ॥ २६ ॥
तस्मिन्निवृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः ।
दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ॥ २७ ॥
अनक्षज्ञो ह्य[4]यं राजन्नपि तद्व्य[5]सनं महत् ।
इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत ॥२८॥
शतं सहस्रमयुतं रामस्तत्राऽऽददे पणम् ।
तं तु रुक्म्यजयत्तत्र कालिङ्गः प्राहसद्बलम् ।
दन्तान्संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥ २९ ॥
ततो लक्षं रुक्म्यगृह्णाद् ग्लहं त[6]त्राजयद्बलः ।
जितवानहमित्याह रुक्मी कैतवमाश्रितः ॥३०॥
मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि ।

---

१ वीर० प्रजङ्घो । २ विज० सिद्धो । ३ वीर० वृको ह्यर्को । विज० वृकोऽर्हकोऽनिलो नीलो । ४ उभ० बह्वन्नोन्नाद एव च । ५ विज० महाशापोऽवनो । ६ विज० कृतिः । ७ उभ० ताम्रपत्राद्या । ८ विज० वैवाहिकीं क्रियां । ९ वीर० अयं श्लोकः उत्तरश्च श्लोकः पूर्वोत्तरतया व्यत्यस्तौ वर्तेते । विज० अयं श्लोकः कुण्डलिताधिकपाठे अष्टमश्लोकतया वर्तते । १० वीर० दनङ्गोऽङ्गवृत । ११ विज० कुण्डलितोयं पाठोऽधिकः ।

१ उभ० विशालाक्षः । २ विज० तयोगं । ३ वीर० प्रद्युम्नाद्यास्तथा परे । ४ उभ० बलो राजन् । ५ विज० तद्व्यसनी महान् । ६ वीर० तं चाजयद्बलः । विज० तदजयद्बलः ।

जात्याऽरुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥३१॥
तं चापि जितवान्रामो धर्मेण च्छलमाश्रितः ।
रुक्मी जितं मयाऽत्रेमे वदन्तु प्राश्निका इति ३२
[तथेत्याह कलिङ्गोऽपि दन्तान्संदर्श्य सीरिणः ।
ततः कोपपरीतात्मा तूष्णीमासीद्धलायुधः ॥१॥]
तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः ।
धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥ ३३ ॥
तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः ।
सङ्कर्षणं परिहसन्बभाषे कालचोदितः ॥ ३४ ॥
नैवाक्षकोविदा यूयं गोपाला वनगोचराः ।
अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ३५
रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ।
क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥३६॥
कलिङ्गराजं तरसा गृहीत्वा दशमे पदे ।
दन्तानपातयत्क्रुद्धो योऽहसद्विवृतैर्द्विजैः ॥ ३७ ॥
अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः ।
राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥३८॥
निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ।
रुक्मिणीबलयो राजन्स्नेहभङ्गभयाद्धरिः ॥ ३९ ॥
ततोऽनिरुद्धं सह सूर्यया वरं
रथं समारोप्य ययुः कुशस्थलीम् ।
रामादयो भोजकटाद्दशार्हाः
सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥



बाणासुरपुत्र्या ऊषया प्रच्छन्नं रममाणस्य अनिरुद्धस्य बाणासुरेण बन्धनं ॥ १ ॥

---

**राजोवाच—**
बाणस्य तनयामूषामुपयेमे यदूत्तमः ।
तत्र युद्धमभूद्घोरं हरिशंकरयोर्महत् ।
एतत्सर्वं महायोगिन्समाख्यातुं त्वमर्हसि ॥ १ ॥
**श्रीशुक उवाच—**
बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ।
येन वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥
तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ।
मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः॥३॥
शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा ।
तस्य शंभोः प्रसादेन किंकरा इव तेऽमराः ।
सहस्रबाहुर्वाद्येन ताण्डवे तोषयन्मृडम् ॥ ४ ॥
भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः ।
वरेण च्छन्दयामास स तं वव्रे पुराधिपम् ॥५॥
स एकदाऽऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ।
किरीटेनार्कवर्णेन संस्पृशंस्तत्पदांबुजम् ॥ ६ ॥
नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ।
पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥ ७ ॥
दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् ।
त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम्॥८॥
कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ।
आद्यायां चूर्णयन्नद्रीन्भीतास्तेऽपि प्रदुद्रुवुः ॥९

१ वीर० पूर्ववद्ग्लह । २ विज० छलतोऽब्रवीत् । ३ विज० एकः श्लोकोऽधिकः। ४ वीर० अथाब्रवी । ५ वीर० वञ्चनेनैव । ६ वीर० श्चापहासितः । ७ अयं एतदुत्तरश्चाध्यायौ विजयध्वजीयपाठे न स्तः ।

१ विज० क्रुद्धस्त्वष्टापदेनैनं। २ वीर० जघ्ने तं नृम्णसंसदि। विज० जघानोद्वाहकर्मणि। ३ विज० अथोनिरुद्धं सह भार्यया । ४ उभ० दशार्हकाः । ५ विज० षट्सप्ततितमोऽध्यायः ॥६७॥ ६ वीर० स च । ७ वीर० अभ्यर्या ।

# एकसप्ततितमोऽध्यायः ॥ ७१ ॥

पाण्डवान्द्रष्टुं श्रीकृष्णस्य इन्द्रप्रस्थगमनं ॥ १ ॥

श्रीशुक उवाच—
इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ।
सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥१॥
उद्धव उवाच—
यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ।
कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥
यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ।
[पूर्वं गन्तव्यमस्माभिरिन्द्रप्रस्थमितः प्रभो ।
तत्रैव तदनुज्ञातस्तदर्थं जहि मागधम् ॥ १ ॥]
अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥
अस्माकं च महानर्थो ह्येतेनैव भविष्यति ।
यशश्च तव गोविन्द राज्ञो बद्धान्विमुञ्चतः ॥४॥
स वै दुर्विषहो राजा नागायुतसमो बले ।
बलिनामपि चान्येषां भीमं समबलं विना ॥५॥
द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः ।
ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥६॥
ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ।
हनिष्यति न सन्देहो द्वैरथे तव सन्निधौ ॥ ७ ॥
निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ८ ॥
गायन्ति ते विशदकर्म गृहेषु देव्यो
राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः
पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ९ ॥
जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते ।
प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥१०॥
श्रीशुक उवाच—
इत्युद्धववचो राजन्सर्वतोभद्रमच्युतम् ।
देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥ ११ ॥
अथाऽऽदिशत्प्रयाणाय भगवान्देवकीसुतः ।
भृत्यान्दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः ॥१२॥
निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान् ।
सङ्कर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ।
सूतोपनीतं स्वरथमारुहद्गरुडध्वजम् ॥ १३ ॥
ततो रथद्विपभटसादिनायकैः
करालया परिवृत आत्मसेनया ।
मृदङ्गभेर्यानकशङ्खगोमुखैः
प्रघोषघोषितककुभो निराक्रमत् ॥ १४ ॥
नृवाजिकाञ्चनशिविकाभिरच्युतं
सहात्मजाः पतिमनु सुव्रता ययुः ।
वरांबराभरणविलेपनस्रजः
सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥
नरोष्ट्रगोमहिषखराश्वतर्यनः-
करेणुभिः परिजनवारयोषितः ।
स्वलङ्कृताः कटकुटिकंबलांबरा-
द्युपस्करा ययुरधियुज्य सर्वतः ॥ १६ ॥
बलं बृहद्ध्वजपटछत्रचामरै-

१ विज० अयमध्यायः (७९) एकोनाशीतितमः ॥ २ वीर० दिशश्च जयिना । ३ वीर० एकः श्लोकोऽधिकः । ४ वीर० ततो जरासुतजयः । विज० अतो जरासुतवधः । ५ उभ० हि मे । ६ वीर० बन्धाद्विमुञ्चतः । विज० बन्धाद्विमुच्यतः । ७ विज० सर्वैर्दुर्विषहो । ८ वीर० भीममुग्रबलं । विज० भीमसेनबलं । ९ वीर० द्वैरथेन तु । १० वीर० न तथाऽक्षौहिणीशतैः । विज० न शताक्षौहिणीयुतः । ११ विज० भूत्वा । १२ वीर० द्वैरथं । १३ वीर० निमित्तं परमीशस्त्वं । विज० निमित्तमात्रमीशस्य । १४ विज० कालाख्यारूपिण ।

१ वीर० कर्मविपाकेन । विज० कालविपाकेन । २ उभ० मच्युतः । ३ उभ० रामश्च । ४ विज० स निर्गम्यावरोधात्स्वात्स्वसु । ५ विज० शत्रुहा । ६ वीर० मारोहद्गरुड । ७ वीर० प्रघोषघोषिताः ककुभो । विज० संघुष्टया वै ककुभो । ८ वीर० स्ववाजि । विज० प्रियाश्च काञ्चन । ९ विज० तर्यः । ० विज० मटकुटि ।

वैरायुधाभरणकिरीटवर्मभिः ।
दिवांशुभिस्तुमुलरवं बभौ रवे-
र्यथाऽर्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १७ ॥
अथो मुनिर्यदुपतिना सभाजितः
प्रणम्य तं हृदि विदधद्विहायसा ।
निशम्य तद्व्यवसितमाहृतार्हणो
मुकुन्दसंदर्शननिर्वृतेन्द्रियः ॥ १८ ॥
राजदूतमुवाचेदं भगवान्प्रीणयन् गिरा ।
मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् १९
इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ।
तेऽपि संदर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः ॥२०॥
आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ।
गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥
ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम्
पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥२२॥
तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ।
अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥२३॥
गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ।
अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवाऽऽदृतः॥२४
दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ।
चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनःपुनः ॥ २५ ॥
दोर्भ्यां परिष्वज्य रमाऽमलालयं
मुकुन्दगात्रं नृपतिर्हताशुभः ।
लेभे परां निर्वृतिमश्रुलोचनो
हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥
तं मातुलेयं परिरभ्य निर्वृतो
भीमः स्मयन्प्रेमजवाकुलेन्द्रियः ।
यमौ किरीटी च सुहृत्तमं मुदा
प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥
[युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् ।]
अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ।
ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथाऽर्हतः २८
मानितो मानयामास कुरुसृञ्जयकैकयान् ।
सूतमागधगन्धर्वा वन्दिनश्चोपमन्त्रिणः ॥ २९ ॥
मृदङ्गशङ्खपटहवीणापणवगोमुखैः ।
ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥
एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ।
संस्तूयमानो भगवान्विवेशालङ्कृतं पुरम् ॥ ३१ ॥
संसिक्तवर्त्म करिणां मदगन्धतोयै-
श्चित्रध्वजैः कनकतोरणपूर्णकुंभैः ।
मृष्टात्मभिर्नववदुकूलविभूषणस्र-
ग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥
उद्दीप्तदीपबलिभिः प्रतिसद्म जाल-
निर्यातधूपरुचिरं विलसत्पताकम्
मूर्धन्यहेमकलशै रजतोरुशृङ्गै-
र्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥
प्राप्तं निशम्य नरलोचनपानपात्र-
मौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म पतींश्च तल्पे
द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥
तस्मिन्सुसङ्कुल इभाश्वरथद्विपद्भिः
कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ।
नार्यो विकीर्य कुसुमैर्मनसोपगुह्य
सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ३५ ॥
ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नी-
स्तारा यथोडुपसहाः किमकार्यभूमिः ।
यच्चक्षुषां पुरुषमौलिरुदारहास-
लीलाऽवलोककलयोत्सवमातनोति ॥ ३६ ॥
तत्रतत्रोपसंगम्य पौरा मङ्गलपाणयः ।
चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः॥३७॥
अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ।
ससंभ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३८ ॥

१ वीर० निरगा । विज० निदध । २ वीर० न्देवकीसुतः । विज० प्रेमया गिरा । ३ वीर० प्रहितो । ४ उभ० प्रत्यैक्षन्त मुमु । ५ वीर० मुपागमत् । ६ उभ० कृष्णस्नेहेन । ७ विज० रमालयालयं । ८ उभ० जलाकुले । ९ वीर० इदमर्धमधिकं ।

१ विज० मानिनो । २ उभ० वेणुभिः । ३ विज० वरदुकूल । ४ विज० दीपावलिभिः । ५ वीर० युवतयश्च नरेन्द्रमार्गं । ६ विज० रुच्छित ।

पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ।
प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥ ३९॥
गोविन्दं गृहमानीय देवदेवेशमादृतः ।
पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥४०॥
पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ।
स्वयं च कृष्णया राजन्भगिन्या चाभिवन्दितः ४१
श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ।
आनर्च रुक्मिणीं सत्यां भद्रां जांबवतीं तथा४२
कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् ।
अन्याश्चाभ्यागता यास्तु वासःस्रग्मण्डनादिभिः॥
सुखं निवासयामास धर्मराजो जनार्दनम् ।
ससैन्यं सानुगामात्यं सभार्यं च नवंनवम् ॥४४॥
तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः ।
मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ४५
उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ।
विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

जरासन्धवधः ॥ १ ॥

**श्रीशुक उवाच—**
एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १॥
आचार्यैः कुलवृद्धैश्च ज्ञातिसंबन्धिबान्धवैः ।
शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥
**युधिष्ठिर उवाच—**
क्रतुराजेन गोविन्द राजसूयेन पावनीः ।
यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो ॥ ३ ॥
त्वत्पादुके अविरतं परि ये चरन्ति
ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्ग-
माशासते यदि त आशिष ईश नान्ये ॥ ४ ॥
तद्देवदेव भवतश्चरणारविन्द-
सेवानुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति न भजन्त्युत वोभयेषां
निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥ ५ ॥
न ब्रह्मणः स्वपरभेदमतिस्तव स्या-
त्सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादः
सेवाऽनुरूपमुदयो न विपर्ययोऽत्र ॥ ६ ॥
**श्रीभगवानुवाच—**
सम्यग्व्यवसितं राजन्भवता शत्रुकर्शन ।
कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥७॥
ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ।
सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥
विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे ।
संभृत्य सर्वसंभारानाहरस्व महाक्रतुम् ॥ ९ ॥
एते ते भ्रातरो राजँल्लोकपालांशसंभवाः ।
जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः॥
न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ।
विभूतिर्भिर्वाऽभिभवेद्देवोऽपि किमु पार्थिवः ११
**श्रीशुक उवाच—**
निशम्य भगवद्गीतं प्रीतः फुल्लमुखांबुजः ।

१ विज० पत्नीः सुवर्चसः । २ विज० समन्वितः । ३ वीर० शमने सुधियो । विज० नशने सुधियो । ४ विज० विन्दन्ति ये । ५ विज० न्त्यपि वो ।

१ उभ० हृता । २ वीर० रथैर्वृतः । ३ विज० एकोनाशीतितमोऽध्यायः ॥७९॥ ४ विज० संसेवया । ५ वीर० चरिष्यति । ६ वीर० निर्जित्य । ७ विज० वशोस्मि तव ताताहं । ८ विज० र्वा विभवैर्देवोपि । ९ विज० प्रीत्युत्फुल्ल ।

भ्रातॄन्दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् ॥१२
सहदेवं दक्षिणस्यामादिशत्सह सृञ्जयैः ।
दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ।
प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः १३
ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा ।
अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥
श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ।
आहोपायं तमेवाऽऽद्य उद्धवो यमुवाच ह ॥१५॥
भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः ।
जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥
ते गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनम् ।
ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिङ्गिनः ॥ १७॥
राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान् ।
तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥ १८॥
किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ।
किं न देयं वदान्यानां कः परः समदर्शिनाम् १९
योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ।
नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः॥
हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः ।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः॥२१॥

श्रीशुक उवाच—

स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ।
राजन्यबन्धून्विज्ञाय दृष्टपूर्वानचिन्तयत् ॥२२॥
राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति ।
ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजं २३
बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ।
ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥२४॥
श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ।
जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् २५
जीवता ब्राह्मणार्थाय कोऽन्वर्थः क्षत्रबन्धुना ।
देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥

१ विज० राजन् । २ विज० दिव्यमञ्जसा । ३ उभ० तं गत्वा । ४ उभ० समयाचन्त राजन्या । ५ उभ० नस्मानर्थिनो गृहमागतान् । ६ वीर० किमदेयं । ७ वीर० र्न श्रूयते । ८ विज० नेहतां । ९ विमलं ।

इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ।
हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः॥२७
श्रीभगवानुवाच—
युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे ।
युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः २८
असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ।
अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् २९
एवमावेदितो राजा जहासोच्चैः स्म मागधः ।
आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः ३०
न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ।
मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥३१॥
अयं तु वयसाऽतुल्यो नातिसत्त्वो न मे समः ।
अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥३२
इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् ।
द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥३३॥
ततः समे खले वीरौ संयुक्तावितरेतरौ ।
जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥३४॥
मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ।
चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥३५॥
ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ।
गदयोः क्षिप्तयो राजन्दन्तयोरिव दन्तिनोः ३६
ते वै गदे भुजजवेन निपात्यमाने
अन्योन्यतोंऽसकटिपादकरोरुजत्रून् ।
चूर्णीबभूवतुरुपेत्य यथार्कशाखे
संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः ॥ ३७ ॥
इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ
क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ।
शब्दस्तयोः प्रहरतोरिभयोरिवाऽऽसी-
न्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥

१ उभ० स मागधः । २ वीर० प्रदाय । विज० दत्वा स । ३ वीर० समे स्थले । विज० समबलौ । ४ विज० संसक्ता । ५ वीर० वितरेतरम् । ६ वीर० गजयो । ७ वीर० बलेन निहन्यमाने । ८ विज० अन्योन्ययोः सकटि । ९ विज० सन्ध्योः । १० वीर० प्रहरतो । ११ वीर० रयस्सदृशैः । १२ विज० स्पर्शैर्व्यपिष्टां । १३ विज० प्रहरणोर्घनयो ।

तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ।
निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥
एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ।
दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥४०॥
एकदा मातुलेयं वै प्राह राजन्वृकोदरः ।
न शक्तोऽहं जरासन्धं निर्जेतुं युधि माधव॥४१॥
शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम् ।
पार्थमाप्याययन्स्वेन तेजसाऽचिन्तयद्धरिः ॥४२॥
सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः ।
दर्शयामास विटपं पाटयन्निव संज्ञया ॥ ४३ ॥
तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ।
गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥४४॥
एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ।
गुदतः पाटयामास शाखामिव महागजः ॥४५॥
एकपादोरुवृषणकटिपृष्ठस्तनांसके ।
एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४६ ॥
हाहाकारो महानासीन्निहते मगधेश्वरे ।
पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४७ ॥
[कृष्णेन च परीरब्धो विरुजोभूद्वृकोदरः ।]
सहदेवं तत्तनयं भगवान्भूतभावनः ।
अभ्यषिञ्चदमेयात्मा मगधानां पतिं प्रभुः ।
मोचयामास राजन्यान्संरुद्धा मागधेन ये ॥४८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ~~७३~~ ॥ ८१

जरासन्धनिरुद्धानां राज्ञां श्रीकृष्णेन मोचनं ॥ १ ॥

**श्रीशुक उवाच—**
अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ।
ते निर्गता गिरिद्रोण्यां मलिना मलवाससः ॥१॥
क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ।
ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥
श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥
पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ।
किरीटहारकटककटिसूत्राङ्गदाचितम् ॥ ४ ॥
भ्राजद्वरमणिग्रीवं निवीतं वनमालया ।
पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥५॥
जिघ्रन्त इव नासाभ्यां रंभन्त इव बाहुभिः ।
प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥
कृष्णसंदर्शनाह्लादध्वस्तसंरोधनक्लमाः ।
प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥७॥

**राजान ऊचुः—**
नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ।
प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः॥८॥
नैनं नाथान्वसूयामो मागधं मधुसूदन ।
अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥
राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः ।
त्वन्मायामोहितो नित्या मन्यते संपदोऽचलाः१०
मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ।
एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥११॥
वयं पुरा श्रीमदनष्टदृष्टयो
जिगीषयास्या इतरेतरस्पृधः ।
घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो

१ वीर० बलयोर्नृप । २ विज० एतदादिश्लोकद्वयं नास्ति । ३ उभ० पद्मपत्रनिभेक्षणं । ४ उभ० गदान्वितं । ५ विज० ईहन्त इव चेतसा ।

१ विज० मतङ्गजः । २ वीर० इदमर्धमधिकं । ३ विज० मोक्षयामास । ४ विज० अशीतितमोऽध्यायः ॥ ८० ॥ ५ वीर० नैनं नाथाभ्यसूयामो । विज० नैव नाथाभ्यसूयामो । ६ विज० नष्टबुद्धयो ।

मृत्युं पुरस्तादविगणय्य दुर्मदाः ॥ १२ ॥
त एव कृष्णाद्य गभीररंहसा
दुरन्तवीर्येण विचालिताः श्रियः ।
कालेन तन्वा भवतोऽनुकंपया
विनष्टदर्पाश्चरणौ स्मराम ते ॥ १३ ॥
अथो न राज्यं मृगतृष्णिरूपितं
देहेन शश्वत्पतता रुजां भुवा ।
उपासितव्यं स्पृहयामहे विभो
क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥
तं नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥
कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमोनमः ॥ १६ ॥
**श्रीशुक उवाच—**
संस्तूयमानो भगवान्राजभिर्मुक्तबन्धनैः ।
तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा १७
**श्रीभगवानुवाच—**
अद्य प्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ।
सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥ १८ ॥
दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ।
श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १९ ॥
हैहयो नहुषो वेनो रावणो नरकोऽपरे ।
श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥
भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत् ।
मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥ २१ ॥
संतन्वन्तः प्रजातन्तून्सुखं दुःखं भवाभवौ ।
प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥ २२ ॥
उदासीनाश्च देहादावात्मारामा धृतव्रताः
मय्यावेश्य मनः सम्यङ्मामन्ते ब्रह्म यास्यथ २३
**श्रीशुक उवाच—**
इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः ।
तेषां न्ययुङ्क्त पुरुषान्स्त्रियो मज्जनकर्मणि ॥ २४ ॥
सपर्यां कारयामास सहदेवेन भारत ।
नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥
भोजयित्वा वरान्नेन सुस्नातान्समलङ्कृतान् ।
भोगैश्च विविधैर्युक्तांस्तांबूलाद्यैर्नृपोचितैः ॥ २६ ॥
ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ।
विरेजुर्मोचिताः क्लेशात्प्रावृडन्ते यथा ग्रहाः २७
रथान्सदश्वानारोप्य मणिकाञ्चनभूषितान् ।
प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् ॥ २८ ॥
त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना ।
ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥ २९ ॥
जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ।
यथाऽन्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः ॥ ३० ॥
जरासन्धं घातयित्वा भीमसेनेन केशवः ।
पार्थाभ्यां संयुतः प्रायात्सहदेवेन पूजितः ॥ ३१ ॥
गत्वा ते खाण्डवप्रस्थं शङ्खान्दध्मुर्जितारयः ।
हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥
तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ।
मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥ ३३ ॥
अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः ।
सर्वमाश्रावयांचक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥
निशम्य धर्मराजस्तत्केशवेनानुकंपितम् ।
आनन्दाश्रुकलां मुञ्चन्प्रेम्णा नोवाच किंचन ३५

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

१ वीर० पुरस्तादगणय्य । विज० परं त्वामगणय्य । २ वीर० विचालितश्रियः । ३ विज० तद्वं । ४ वीर० नमाम ते । विज० स्मरामहे । ५ विज० रुजोभुवा । ६ वीर० यथा । ७ विज० पश्यतोन्मादनं । वीर० पश्य उन्मादनं । ८ विज० यत्ताः । ९ विज० सुखदुःखे ।

१ उभ० धर्मराजस्तु । २ विज०

# चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

युधिष्ठिरस्य राजसूययागः ॥ १ ॥ शिशुपालवधः ॥ २ ॥

**श्रीशुक उवाच—**
एवं युधिष्ठिरो राजा जरासन्धवधं विभोः ।
कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत्॥१॥
**युधिष्ठिर उवाच—**
ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ।
वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥२॥
स भवानरविन्दाक्षो दीनानामीशमानिनाम् ।
धत्तेऽनुशासनं भूमंस्तदत्यन्तविडंबनम् ॥ ३ ॥
न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥
न वै तेऽजित भक्तानां ममाहमिति माधव ।
त्वं तवेति च नाना धीः पशूनामिव वैकृता ॥५॥
**श्रीशुक उवाच—**
इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः ।
कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः॥६॥
द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः ।
वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥
विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ।
पैलः पराशरो गर्गो वैशंपायन एव च ॥ ८ ॥
अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ।
वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥९॥
उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ।
धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ।
तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥ ११ ॥
ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः ।
कृष्ट्वा तत्र यथाम्नायं दीक्षयाञ्चक्रिरे नृपम्॥१२॥
हैमाः किलोपकरणा वरुणस्य यथा पुरा ।
इन्द्रादयो लोकपाला विरिञ्चभवसंयुताः ॥१३॥
सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ १४ ॥
राजानश्च समाहूता राजपत्न्यश्च सर्वशः ।
राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै॥१५॥
मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ।
अयाजयन्महाराजं याजका देववर्चसः ।
राजसूयेन विधिवत्प्राचेतसमिवामराः ॥ १६ ॥
सुत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् ।
अपूजयन्महाभागान्यथावत्सुसमाहितः ॥ १७ ॥
सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ।
नाध्यगच्छन्ननैकान्त्यात्सहदेवस्तदाऽब्रवीत्॥१८॥
अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः ।
एष वै देवताः सर्वा देशकालधनादयः ॥ १९ ॥
यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः
अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः ॥२०
एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ।
आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हन्त्यजः॥
विविधानीह कर्माणि जनयन्यदवेक्षया ।
ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥ २२ ॥
तस्मात्कृष्णाय महते दीयतां परमार्हणम् ।
एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २३ ॥
सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ।
देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता २४
इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ।
तच्छ्रुत्वा तुष्टुवुः सर्वे साधुसाध्विति सत्तमाः २५
श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ।
समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥

---

१ विज० यस्य त्रिलोक । २ वीर० जनाना । ३ वीर० परमेष्ठिनः । ४ उभ० न च तेजित । ५ वीर० ऽगस्त्यो । ६ विज० ततस्तद्देव ।

१ वीर० सौत्येहन्यवनी । २ वीर० विमृशंश्च । ३ वीर० यत्परं । ४ वीर० सर्वान् । ५ वीर० जातहार्दं ।

तत्पादाववनिज्यापः शिरसा लोकपावनीः ।
सभार्यः सानुजामात्यः सकुटुंबोऽवहन्मुदा ॥२७॥
वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ।
अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥२८॥
इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ।
नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ २९ ॥
इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
संश्रावयन्भगवते परुषाण्यभीतः ॥ ३० ॥
ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥
यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ।
सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥ ३२॥
तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान् ।
परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥ ३३ ॥
सदस्पतीनतिक्रम्य गोपालः कुलपांसनः ।
यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥
वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः
स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥
ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ।
वृथा पानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥
ब्रह्मर्षिसेवितान्देशान् हित्वैतेऽब्रह्मवर्चसम् ।
समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥३७॥
एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।
नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम् ३८
भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ।
कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥३९॥
निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ४०
ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः ।
उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥४१
ततश्चैद्यस्त्वसंभ्रान्तो जगृहे खड्गचर्मणी ।
भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत ॥४२॥
तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ।
शिरः क्षुरान्तचक्रेण जहारापततो रिपोः ॥४३॥
शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान्
तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४४ ॥
चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ।
पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥४५॥
जन्मत्रयानुगुणितवैरसंरब्धया धिया ।
ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ४६
ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ।
सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७॥
साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ।
उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥४८
ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः
ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥४९॥
वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ।
वैकुण्ठवासिनोर्जन्म विप्रशापात्पुनःपुनः ॥५०॥
राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ।
ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥
राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ।
कृष्णं क्रतुं च शंसन्तः स्वधामानि ययुर्मुदा ॥५२
दुर्योधनमृते पापं कलिं कुरुकुलामयम् ।
यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य तां ५३
य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ।
राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

१ विज० स्वात्पेतुः । २ विज० स्यमर्षीसंश्राव । ३ उभ० गोपोऽयं । ४ विज० मन्तं सपर्यां । ५ वीर० तद्ब्रह्मवर्चसम् । विज० ते ब्रह्मवर्चसः । ६ वीर० ते सभासदः ।

१ विज० तत्राततायिनो । २ विज० अयं श्लोको नास्ति । ३ विज० द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

# पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ 83

सभादर्शनार्थं गतस्य स्थलभ्रान्त्या जले पतितस्य दुर्योधनस्य मानभङ्गः ॥ १ ॥

राजोवाच—
अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ।
सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १ ॥
दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ।
इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥
ऋषिरुवाच·
पितामहस्य ते यज्ञे राजसूये महात्मनः ।
बान्धवाः परिचर्यायां तस्याऽऽसन्प्रेमबन्धनाः॥३॥
भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ।
सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४ ॥
गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ।
परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥
युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ।
बाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥ ६ ॥
निरूपिता महायज्ञे नानाकर्मसु ते तदा ।
प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥ ७॥
ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु
स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे
चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥
मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः ।
वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥
नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ।
वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥१०॥
चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ।
स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥
यदुसृञ्जयकांबोजकुरुकेकयकोसलाः ।
कंपयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥
सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ।
देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥
स्वलङ्कृता नरा नार्यो गन्धस्रग्भूषणांबरैः ।
विलिंपन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः १४
तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ।
पुंभिर्लिप्ताः प्रलिंपन्त्यो विजह्रुर्वारयोषितः॥१५॥
गुप्ता नृभिर्निरगमन्नुपलब्धुमेत-
द्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।
ता मातुलेयसखिभिः परिषिच्यमानाः
सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥
ता देवरानुत सखीन् सिषिचुर्दृतीभिः
क्लिन्नांबरा विवृतगात्रकुचोरुमध्याः ।
औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः
क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥
स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ।
व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव १८
पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ।
आचान्तं स्नापयाश्चक्रुर्गङ्गायां सह कृष्णया॥१९॥
देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ।
मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥
सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः ।
महापातक्यपि यतः सद्यो मुच्येत किल्बिषात्२१
अथ राजाऽहते क्षौमे परिधाय स्वलङ्कृतः ।
ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः ॥ २२ ॥
बन्धुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः ।
अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥२३॥

१ विज० ब्रह्मन्देवा ये च। २ वीर० राजानमृषयः सुराः। विज० राजान ऋषयः। ३ उभ० सतां शुश्रूषणे। ४ विज० कर्मविशारदाः। ५ विज० चिकीर्षया। ६ विज० सूनृतमर्हार्हण। ७ वीर० दुन्दुभ्यानक। विज० सतूर्यानक। ८ विज० नेदुरारान्महोत्सवे। ९ विज० पताकाद्यै।

१ विज० पुरःसरैः। २ उभ विलिंपन्तोभिषिञ्चन्तो। ३ उभ० कवरच्यवमान। ४ विज० रुचिरैः समेताः। ५ विज० दिवि। ६ विज० इदमर्धं नास्ति।

सर्वे जनाः सुररुचो मणिकुण्डलस्र-
गुष्णीपकञ्चुकदुकूलमहार्घ्यहाराः ।
नार्यश्च कुण्डलयुगालकवृन्दजुष्ट-
वक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥
अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ।
ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः॥२५॥
देवर्षिपितृभूतानि लोकपालाः सहानुगाः ।
पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥
हरिदासस्य राजर्षे राजसूयमहोदयम् ।
नैवातृप्यन्प्रशंसन्तः पिबन्मर्त्योऽमृतं यथा ॥२७॥
ततो युधिष्ठिरो राजा सुहृत्संबन्धिबान्धवान् ।
प्रेम्णा निवासयामास कृष्णं च त्यागकातरः २८
भगवानपि तत्राङ्ग न्यवात्सीत्तत्प्रियङ्करः ।
प्रस्थाप्य यदुवीरांश्च सांबादींश्च कुशस्थलीम्॥२९
इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ।
सुदुस्तरं समुत्तीर्य कृष्णेनाऽऽसीद्गतज्वरः ॥३०॥
एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ।
अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥३१॥
यस्मिन्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मी-
र्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।
ताभिः पतीन्द्रुपदराजसुतोपतस्थे
यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२ ॥
यस्मिंस्तदा मधुपतेर्महिषीसहस्रं
श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
मध्ये सुचारुकुचकुङ्कुमशोणहारं
श्रीमन्मुखं प्रचलकुण्डलकुन्तलाढ्यम् ॥ ३३ ॥
सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ।
वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥३४॥
आसीनः काञ्चने साक्षादासने मघवानिव ।
पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिः ३५
[उपास्यमानो विप्रेन्द्रैर्नानादेशसमागतैः ।
दोधूयमानो धवलैर्वालव्यजनसंकुलैः ।
रराज राजशार्दूलो दिवि देवपतिर्यथा ॥ १ ॥
विजयध्वजीयपाठे त्र्यशीतितमोऽध्यायः ॥८३॥
श्रीशुक उवाच—]
तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ।
किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा ॥३६॥
स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ।
[स्थलं पुष्करिणीं मत्वा सर्वे तं जहसुर्जनाः ।
आगच्छन्नेवमुर्वीशः पुरः पुष्करिणीं क्वचित् ।
विलोक्य स्फाटिकां भूमिं मन्वानो न्यपतज्जले १]
जले च स्थलवद्भ्रान्त्या मयमायाविमोहितः ३७
जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ।
निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ३८
[अजातशत्रुराकर्ण्य वस्त्रस्रग्भूषणादिकम् ।
संप्रेष्याह्वापयास साम्ना योगेश्वरेण च ॥ १ ॥
तदनादृत्य सत्कारं व्रीडावनतकन्धरः ।
जाज्वल्यमानहृदयो न जगाम तदन्तिकम् ॥२॥]
स व्रीडितोऽवाग्वदनो रुषा ज्वल-
न्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।
हाहेति शब्दः सुमहानभूत्सता-
मजातशत्रुर्विमना इवाभवत् ।
बभूव तूष्णीं भगवान्भुवो भरं ।
समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥

१ विज० महाशिक्षाः । २ विज० मुदा । ३ वीर० निवारयामास । ४ विज० सुसमृद्धं । ५ उभ० लक्ष्म्यो नाना । ६ विज० वक्षः । ७ वीर० चपलकुण्डल । विज० चकुण्डल । ८ उभ० विराट् ।

१ विज० सार्धश्लोकोऽधिकः । त्र्यशीतितमाध्यायसमाप्तिश्च । २ विज० राजा । ३ विज० भ्रातृभिः प्रियैः । ४ वीर० नृपान् । ५ विज० हरिनीलोपलाचिते । ६ विज० सार्धश्लोकोऽधिकः । ७ विज० इदमर्धं नास्ति । ८ विज० भूपाश्च केचन । ९ विज० श्लोकद्वयमधिकं । १० उभ० नभूत्तदा । ११ विज० जिहीर्षुरात्मेहितमात्मनि स्मरन् ।

एतत्ते[1]ऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया । सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे पञ्च[1]सप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

श्रीकृष्णस्य इन्द्रप्रस्थगमनसमये शाल्वेन द्वारवतीमेत्य नगरद्वारनिरोधः ॥ १ ॥ वृष्णीनां शाल्वस्य च युद्धे प्रद्युम्न-पराजयः ॥ २ ॥

श्रीशुक[2] उवाच—

अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप
क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥
शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः
यदुभिर्निर्जितः सङ्ख्ये जरासन्धादयस्तथा ॥ २ ॥
[तदाऽऽविरा[3]सीज्जगदीशसन्निधौ
मुनिः सुराराधितपादपङ्कजः ॥
उपेत्य नारदः सर्वैः सदस्यैरभिपूजितः ।
कृष्णेनाभ्यर्चितः सम्यगुपविष्टो नृपान्तिके ॥
उवाच धर्मराजस्तं प्रणिपत्य यथाविधि ।
भवान्सर्वत्रगो ब्रह्मन्सर्वकालेष्वसङ्गतः ॥
नृपाणां शौर्ययुक्तानां सर्वमण्डलवासिनाम्
इदानीं कतमः शूरो नित्योद्योगेन वर्तते ॥
इति तेनोदितां वाणीमाकर्ण्य मुनिरब्रवीत् ॥

नारद उवाच—

भग्नदर्पा नृपाः सर्वे कृष्णेनाप्रतिमौजसा ।
वसन्ति विषये स्वेस्वे नष्टचेष्टा गतश्रियः ॥ ६ ॥
एक एव महोत्साहः क्षत्रियाणां दुराग्रही ।
जातः शाल्वेषु नृपतिर्बहुपादातिवाहनः ॥ ७ ॥
भ्रातर्युपरते युद्धे विष्णुना लोकजिष्णुना ।
ब्रह्मदत्तसुते हंसे यमुनायां महात्मना ॥ ८ ॥
कृष्णद्विडेत्य राज्ञोसौ रुक्म्यादीन्कुण्डिने पुरे ।
समाजं कारयामास भ्रातुरानृण्यकाङ्क्षया ॥ ९ ॥
शिशुपालद्रुमप्रमुखैर्दन्तवक्रपुरःसरैः ।
पराजितेषु सङ्ग्रामे जरासन्धादिषु प्रभो ॥ १० ॥]
शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ।
अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥३॥
इति मूढः प्रतिज्ञाय [तपसे[2] प्राविशद्वनम् ।
गते तस्मिन्बहून्वर्षान्प्रतीक्ष्य तदुपागमम् ॥
तदनन्तरजोऽमात्यैरभिषिक्तो नृपार्थिभिः
तपस्तप्त्वा स नृपतिः] देवं पशुपतिं प्रभुम् ।
आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥
संवत्सरान्ते भगवाना[3]शुतोष उमापतिः ।
वरेण च्छन्दयामास शाल्वं शरणमागतम् ॥ ५ ॥
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥६॥
तथेति गिरिशादिष्टो मयः परपुरञ्जयः ।
पुरं निर्माय शाल्वाय प्रादात्सौभमयं[4]स्वयम् ॥७॥
स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ।
[आ[5]ययौ स्वं जनपदं समग्रबलवाहनम् ।
इदानीं राजपुत्राणां स एवोद्योगवान्नृप ॥ १ ॥
इति धर्मसुतः श्रीमाञ्श्रुत्वा तन्नारदोदितम् ।
पार्श्वे भगवतः शौरेः शनैर्मुखमवैक्षत ॥ २ ॥
निशम्य तद्वासुदेवो धैर्यसारो निराकुलः ।
किंचित्प्रहस्यास्तु नामेत्याह सा हि महात्मता ३
पूजयित्वा ऋषिं सम्यक्सूनृतैर्गीर्भिरच्युतः ।

१ विज० अयं श्लोको नास्ति । २ विज० एतदारभ्य द्वौ श्लोकौ न स्तः । ३ विज० कुण्डलितो भागोऽधिकः ।

१ विज० ३५ तमे श्लोक एव अध्यायविच्छेदस्य गतत्वादत्राध्यायसमाप्तिर्नास्ति । २ विज० कुण्डलान्तर्गतः पाठोऽधिकः । ३ विज० भगवान्संतुष्टः स उमापतिः । ४ वीर० मयोमयं । ५ विज० कुण्डलान्तर्गताः श्लोका अधिका दृश्यन्ते।

चिराभिलषितः सोपि प्राप्तः साध्वित्यचिन्तयत् ४
उग्रसेनं यदुपतिं युयुधानं च माधवः ।
अक्रूरं कृतवर्माणमन्यांश्च यदुपुङ्गवान् ।
प्रेषयामास रक्षार्थं द्वारवत्याः स्वसैनिकान् ॥५॥
विजयध्वजीयपाठे चतुरशीतितमोऽध्यायः॥८४॥
**श्रीशुक उवाच—**
तथा वसति गोविन्दे शक्रप्रस्थे महात्मनि ।
स सानुजे चैव नृपे कृतकृत्ये युधिष्ठिरे ॥ ६ ॥
आकर्ण्य शाल्वः सङ्क्रुद्धो दमघोषसुतं हतम् ।
जरासन्धं च सुहृदं राजसूयं क्रतुं कृतम् ॥ ७ ॥
ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥८॥
निरुध्य सेनया शाल्वो महत्या भरतर्षभ ।
पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥
सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ।
विहारान्स विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥१०॥
शिलाद्रुमाश्चाशनयः सर्पा आसारशर्कराः ।
प्रचण्डश्चक्रवातोऽभूद्रजसाऽऽच्छादिता दिशः ११
इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ।
नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥
प्रद्युम्नो भगवान्वीक्ष्य बाध्यमाना निजाः प्रजाः ।
मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः॥१३॥
सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः ।
हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥१४॥
अपरे च महेष्वासा रथयूथपयूथपाः ।
निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥
ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ।
यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥
तांश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ।
क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥१७॥
विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ।
शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥१८
शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ।
दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥१९॥
तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ।
दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥२०॥
बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ।
मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥
क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ।
अलातचक्रवद्भ्राम्यन्सौभं तद्दुरवस्थितम् ॥ २२ ॥
यत्रयत्रोपलक्ष्येत ससौभः सहसैनिकः ।
शाल्वस्ततस्ततोऽमुञ्चञ्छरान्सात्वतयूथपाः ॥२३॥
शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ।
पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः ॥२४॥
शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ।
न तत्यजू रणं स्वंस्वं लोकद्वयजिगीषवः ॥२५॥
शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ।
आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली २६
प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिन्दमम् ।
अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥२७॥
लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ।
अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥२८॥
न यदूनां कुले जातः श्रूयते रणविच्युतः ।
विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् २९
किं नु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ ।
युद्धात्सम्यगपक्रान्तः पृष्टस्तत्राऽऽत्मनः क्षमम् ३०
व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ।
क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ३१
**सारथिरुवाच—**
धर्मं विजानताऽऽयुष्मन्कृतमेतन्मया विभो ।
सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥

१ विज० तमावसन्नन्तरिक्षे युयुधे भरतर्षभ । २ विज० विहायसो विमानाग्र्या । ३ विज० शैलाद्रुमा । ४ विज० मथ्यमाना । ५ विज० वाचः पित्रोरनुस्मरन् । ६ उभ० सहानुजैः । ७ विज० रथनागाश्वपत्तिभिः । ८ विज० तां च सौभपतेर्मायां । ९ विज० विव्याध दशभि । २ विज० सर्वेऽस्य पुरवासिनः । ३ विज० मयमायाकृतं यानं दुर्विभाव्यं जनैः । ४ विज० क्वचित्सिन्धौ क्वचिद्गिरौ । ५ विज० तस्य सौभस्य सैनिकः । ६ उभ० सङ्काशैः । ७ विज० त्वरैरिति । ८ वीर० लोकत्रय । ९ वीर० प्रद्युम्नास्त्रप्रपीडितः । १० विज० गुर्व्या । ११ उभ० युद्धाद्धर्म्यादपक्रान्तः । १२ विज० कथं गतो वीर ।

एतद्विदित्वा तु भवान्मयाऽपोवाहितो रणात् । उपसृष्टः परेणेति मूर्च्छितो गदया हतः ॥३३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे षट्सप्ततितमोऽध्यायः ॥७६॥ 85

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ 86

इन्द्रप्रस्थादागतेन श्रीकृष्णेन शाल्ववधः ॥ १ ॥

**श्रीशुक उवाच—**

स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ।
[इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः ।
पुनरात्तप्रहरणः सूतमाह रणाङ्गणे ।
पश्य सूत द्युमानेष दंशितो धृतकार्मुकः ॥ १ ॥]
नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥१
विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ।
प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥
चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ।
द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः॥३॥
गदसात्यकिसांबाद्या जघ्नुः सौभपतेर्बलम् ।
पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकन्धराः ॥ ४॥
एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ।
युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥
इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ।
राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥
कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ।
निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥७॥
आह चाहमिहायात आर्यमिश्राभिसंगतः ।
राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥
वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम्
सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥९॥
रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै ।
संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥१०
इत्युक्तश्चोदयामास रथमास्थाय दारुकः ।
विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥११॥
शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ।
प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥
तामापतन्तीं नभसि महोल्कामिव रंहसा ।
भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत्
तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ।
अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः॥१४॥
शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ।
बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥
हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ।
निनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥
यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ।
प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा १७
तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् ।
नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥

१ विज० इदमर्धं नास्ति । तत्स्थाने कुण्डलितं अर्धत्रयं वर्तते । २ विज० आद्रवन्तं । ३ वीर० प्रतिरुध्य प्रत्यविध्यत् । विज० प्रतिहत्य रुषाऽविध्यत् । ४ विज० द्वाभ्यां च केतुधनुषी । ५ वीर० द्युमतोऽन्येन वै । ६ विज० बहवः साल्वेया भिन्न । ७ वीर० इन्द्रप्रस्थगतः । ८ विज० रणे हते । ९ वीर० कुरुवृद्धानुपामन्त्र्य । विज० एतदारभ्य—"ममाग्रतः" इत्यष्टादशश्लोकपर्यन्तानां द्वादशश्लोकानां स्थाने २६ श्लोकाः सन्ति ते च तत्रैव निर्दिष्टाः ।

१ विज० पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ २ वीर० रामं निरूप्य पुररक्षणे । ३ वीर० सङ्ग्रामस्तेन । ४ वीर० विनद्य । ५ वीर० भार्या चापहृतेक्षतां । ६ विज० "कुरुवृद्धा" नित्यादिसप्तमश्लोकमारभ्य एतत्पर्यन्तानां द्वादशश्लोकानां स्थाने २६ श्लोका वर्तन्ते । ते च—"कुरुवृद्धाननुज्ञाप्य मुनींश्च ब्राह्मणैः सह । अन्वीयमानः सामात्यैः पाण्डवैर्निर्ययौ पुरात् ॥ १ ॥ स गत्वा किंचिदध्वानं स्थापयित्वा पुरौकसः । पृथासुताननुज्ञाप्य प्रणतानश्रुलोचनान् ॥ २ ॥

**श्रीभगवानुवाच—**

वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ।
पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥१९॥
इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया ।
तताड जत्रौ संरब्धः स चकंपे वमन्नसृक् ॥२०॥
गदायां सन्निवृत्तायां शाल्वस्त्वन्तरधीयत ।
ततो मुहूर्त आगत्य पुरुषः शिरसाऽच्युतम् ।
देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् २१
कृष्णकृष्ण महाबाहो पिता ते पितृवत्सल ।
बद्ध्वाऽपनीतः शाल्वेन सौनिकेन यथा पशुः २२
निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ।
विमनस्को घृणी स्नेहाद्भाषे प्राकृतो यथा ॥२३
कथं राममसंभ्रान्तं जित्वाऽजेयं सुरासुरैः ।
शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः ॥
इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः ।
वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥
एष ते जनिता तातो यदर्थमिह जीवसि ।
वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥२६॥
एवंनिर्भर्त्स्य मायावी खड्गेनाऽऽनकदुन्दुभेः ।
उत्कृत्य शिर आदाय खस्थं सौभं समाविशत्२७
ततो मुहूर्ते प्रकृतावुपप्लुतः
स्वबोध आस्ते स्वजनानुपङ्गतः ।
महानुभावस्तदबुध्यदासुरीं
मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥
न तत्र दूतं न पितुः कलेवरं
प्रबुद्ध आजौ समपश्यदच्युतः ।
स्वाप्नं यथा चांबरचारिणं रिपुं
सौभस्थमालोक्य निहन्तुमुद्यतः ॥ २९ ॥
एवं वदन्ति राजर्षे ऋषयः केचनान्विताः ।
यत्स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत ॥३०॥

---

सुवर्णशिबिकारूढैरवरोधवधूजनैः । गजाश्वरथपादातिमहद्भि-रपि संयुतः । अन्वीतराजकटकः प्रतस्थे पश्चिमामुखः ॥ ३ ॥ शाल्वोपि कुरुशार्दूल विमानेन खचारिणा । अपावृत्य रणाद्राष्ट्रं स्वमेवाभ्यर्दितो ययौ ॥ ४ ॥ गच्छमानस्य शाल्वस्य सांबोऽभिद्रुत्य पृष्ठतः । शाल्वामात्यं क्षेमधूर्तिं बाणैर्निन्ये यमक्षयम् ॥ ५ ॥ सेनापतिं विविन्दाख्यं शाल्वस्याखिलवल्लभम् । निरुध्य पथि गच्छन्तं प्रद्युम्नः प्राहरच्छरैः ॥ ६ ॥ प्रद्युम्नेनातिविद्धोऽसौ गृहीत्वा खड्गचर्मणी । ससज्ज रौक्मिणेयेन तदभूद्रणमद्भुतम् ॥ ७ ॥ मण्डलानि विचित्राणि चरतस्तस्य सङ्गरे । कृपाणेन यदुश्रेष्ठः शिरः कायादपाहरत् ॥ ८ ॥ विभ्रष्टमार्गा सा सेना हतप्रवरयूथपा । विदुद्राव यथाकामं प्राणत्राणपरायणा ॥ ९ ॥ देवोपि द्वारकामेत्य वेगेन गरुडध्वजः । ददर्श नगरीं भग्नप्रासादाट्टालगोपुराम् ॥ १० ॥ विशीर्णतोरणां रुग्णतुङ्गसालप्रतोलिकाम् । विध्वस्तोपवनोद्यानां प्रस्तरापूर्णदीर्घिकाम् ॥ ११ ॥ निःस्वाध्यायवषट्कारामालोक्य द्वारकां पुरीम् । अपृच्छत्कृतवर्माणं किमेतदिति दुर्मनाः ॥१२॥ तेनोक्तं सर्वमाकर्ण्य शाल्वराजविचेष्टितम् । प्रतिजज्ञे यदुपतिः शृण्वतां सर्वसात्वताम् ॥ १३ ॥ अनुद्रुत्य तमद्यैव सौभं हत्वा दुरात्मकम् । सौभं निपात्य जलधौ प्रवेक्ष्ये द्वारकामिति॥१४॥ स रथं शैब्यसुग्रीवमेघपुष्पवलाहकैः । युक्तं बहुप्रहरणमग्रावस्थितदारुकम् ॥ १५ ॥ आरुह्य भगवान्विष्णुर्गरुडध्वजमुत्तमम् । प्रययौ सौभपदवीं मनोमारुतरंहसा ॥ १६ ॥ तथा गत्वा सुदूरं तमंभोधेः कुक्षिमाश्रितम् । ददर्श सौभं तन्मध्ये शाल्वं च समलङ्कृतम् ॥ १७ ॥ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः । प्राहरत्कृष्णसूताय शक्तिं भीमां दृढां मृधे ॥ १८ ॥ तामापतन्तीं नभसि महोल्कामिव रंहसा । भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥ १९ ॥ तं च षोडशभिर्बाणैर्विध्वा सौभं च खेचरम् । अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥ २० ॥ शाल्वः शौरेस्ततः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः । बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम्॥२१॥ हाहाकारो महानासीद्यदूनां तत्र पश्यताम् । विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ २२ ॥ यत्त्वया युधि दुर्बुद्धे भ्रातरौ मे महाबलौ । निहतौ हंसडिभिकौ यमुनायां दुरात्मना । यद्भूयो मूढ नः सख्युर्भार्याप्यपहृता त्वया ॥ २३ ॥ यश्च मन्द सभामध्ये दमघोषसुतः सखा । व्यापादितः क्षत्रियाणां पश्यतां हतचेतसाम् ॥ २४ ॥ तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् । नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥२५॥ इति तेनोदितां वाणीमाकर्ण्य मधुसूदनः । प्राहार्दितो बाणगणैः पुनरात्तशरासनः ॥ २६ ॥" १ विज० न यस्यास्त्वतिकौतुकम् ।

---

१ विज० पौरुषं दर्शय त्वं नः शूराणां फल्गु भाषणं । २ विज० एतदारभ्य षड्विंश (२६) श्लोकान्ताः षट् श्लोका न दृश्यन्ते । ३ वीर० मुवाच ह । ४ विज० ततः शाल्वः समुत्पत्य खड्गेनानकदुन्दुभेः । ५ विज० ततो मुहूर्तात्प्रकृतावुपस्थितस्तत्रानुतिष्ठत्स्वजनानुसङ्गतः । ६ विज० आत्मा तदपश्यदच्युतः । ७ विज० स्वप्ने यथा । ८ वीर० विरुध्येरन्न नूनं ते स्मरन्त्युत । विज० विरुध्यन्ते तन्नूनं ते स्मरन्ति नु ।

क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ।
क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्त्वखण्डितः ॥३१
यत्पादसेवोर्जितयाऽऽत्मविद्यया
हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्त आत्मीयमनन्तमैश्वरं
कुतो नु मोहः परमस्य सद्गतेः ॥ ३२ ॥
तं शस्त्रपूगैः प्रहरन्तमोजसा
शाल्वं शरैः शौरिरमोघविक्रमः ।
विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणिं
सौभं च शत्रोर्गदया रुरोज ह ॥ ३३ ॥
तत्कृष्णहस्तेरितया विचूर्णितं
पपात तोये गदया सहस्रधा ।
विसृज्य तद्भूतलमास्थितो गदा-
मुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥
आधावतः सगदं तस्य बाहुं
भल्लेन छित्त्वाऽथ रथाङ्गमद्भुतम् ।
वधाय शाल्वस्य लयार्कसन्निभं
बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५ ॥
जहार तेनैव शिरः सकुण्डलं
किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो
बभूव हाहेति वचस्तदा नृणाम् ॥ ३६ ॥
तस्मिन्निपतिते पापे सौभे च गदया हते ।
नेदुर्दुन्दुभयो राजन्दिवि देवगणेरिताः ।
सखीनामपचितिं कुर्वन्दन्तवक्त्रो रुषाऽभ्यगात्

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे सप्तसप्ततितमोऽध्यायः ॥ ~~७७~~ ॥ 86

## अष्टसप्ततितमोऽध्यायः ॥ ~~७८~~ ॥ 98 101

श्रीकृष्णेन दन्तवक्त्रविदूरथवधः ॥ १ ॥ [विजयध्वजीयपाठानुसारेण मध्ये महाभारतयुद्धकथा ॥ २ ॥] कौरवपाण्डवयुद्धं द्रष्टुममनस्कस्य रामस्य तीर्थयात्राव्याजेन गमनं ॥ ३ ॥

[श्रीशुक उवाच—
उद्वापनस्नानहेतोर्यमुनातीरमागतम् ।
श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्त्रः सहानुजः ॥१॥
महत्या सेनया युक्तो गजानीकसमन्वितः ।
गच्छन्तं द्वारकां कृष्णं पथि रोद्धुं समाययौ ॥२॥
सोऽभ्येत्य पथि गच्छन्तं वृतं यदुकुमारकैः ।
कान्तापोडशसाहस्रशिबिकापरिवारितम् ॥ ३ ॥
राजसङ्घानुगच्छन्तं महर्षिगणसेवितम् ।
ऋत्विक्पुरोहिताचार्यब्राह्मणैश्च समन्वितम् ॥४॥
दन्तवक्त्रोऽरुणन्मूढो मृगेन्द्रं जंबुको यथा ।
रुक्मिणः शिशुपालस्य पौण्ड्रकस्य च दुर्मतेः ॥५॥]

१ वीर० वाऽज्ञानसंभवाः । २ वीर० ज्ञानैश्वर्यस्य ह्यात्मनः । विज० ज्ञानैश्वर्यैश्वरोऽजितः । ३ विज० एतदारभ्याऽऽध्यायसमाप्ति पाठोऽन्यादृशो दृश्यते स चाध्यायान्ते प्रदर्शितः। ४ वीर० युद्ध्वा । ५ विज० अयमध्यायः एकाधिकशत-(१०१) तमः । तत्र पञ्चश्लोकाश्चाधिकाः ।

१ वीर० साङ्गदमस्य बाहुं । २ वीर० देवदुन्दुभयो नेदुस्तदा । ३ विज० त्रयस्त्रिंश (३३) श्लोकमारभ्याऽऽध्यायसमाप्ति पाठोऽन्यादृशो दृश्यते । स च—"इति तैरुदितां वाणीमाकर्ण्य कमलेक्षणः । ससौभं हन्तुमारेभे शाल्वं कुरुकुलोद्वह ॥ १ ॥ ततो निशातमादाय चक्रं कृष्णः सुदर्शनम् । आग्नेयास्त्रेणाभिमन्त्र्य प्राहिणोत्सौभनाशनम्॥२॥ तन्नारायणहस्ताभ्यान्मुक्तमाग्नेयमन्त्रितम् । जज्वाल ब्रह्मसदनंज्वालामालातिभीषणम्॥३॥ ततो वैमानिकाः सर्वे ते विहाय विहायसम् । सुदर्शनोष्मणा तप्ता दुद्रुवुः सर्वतो दिशम् ॥४॥ तदर्कशतसङ्काशं सौभं भित्वा द्विधा पुरम् । भूयो नारायणकरं प्राप भूप सुदर्शनम् ॥ ५ ॥ ततः समुद्रे न्यपतत्पुरं विच्छिन्नबन्धनम् । गदापाणिर्दुराधर्षः शाल्वोऽपि प्रत्यदृश्यत। तां प्रेषयामास गदां कृष्णमुद्दिश्य दुर्मतिः ॥ ६ ॥ ततो रथं दैत्यबलोपनीतं संस्थाय शाल्वो बहुशस्त्रसंचयम् । अवाकिरन्कृष्णशिरस्यनन्तैर्महायुधैश्च व्यनदद्बलिष्ठैथा ॥७॥तां गदां प्रेषितां तेन छित्वा बाणैस्त्रिधा हरिः । पाञ्चजन्यमुपाध्माय सिंहनादं व्यनीनदत् ॥८॥ तं शस्त्रपूगैः प्रहरन्तमोजसा शाल्वं शरैः शौरिरमोघविक्रमः । विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणि रथं च शत्रोर्गदया रुरोज ह ॥९॥ तत्कृष्णहस्तेरि-

४ विज० षडशीति (८६) तमोऽध्यायः ।

श्रीशुक उवाच—

शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः ।
परलोकगतानां च कुर्वन्पारोक्ष्यसौहृदम् ॥ १ ॥
एकः पदातिः संक्रुद्धो गदापाणिः प्रकंपयन् ।
पद्भ्यामिमां[3] महाराज महासत्त्वो व्यदृश्यत ॥२॥
तं तथा यान्तमालोक्य गदामादाय सत्वरः ।
अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात्॥३॥
गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः ।
दिष्ट्यादिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥४॥
त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ।
अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥५॥
तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ।
बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥
एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्रैरिव द्विपम् ।
गदयाऽताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥
गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ।
कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनान्तरे ८

तया विचूर्णितः पपात तोये गदया सहस्रधा । विसृज्य तं भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥१०॥ आधावतो भीमगदस्य बाहुं भल्लेन छित्वाऽथ रथाङ्गमद्भुतम् । वधाय शाल्वस्य लयार्कसंनिभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ११ ॥ जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः । वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ १२ ॥ तस्मिन्निपतिते पापे सौभे चाब्धौ निपातिते । देवदुन्दुभयो नेदुर्ववृषुः पुष्पवृष्टयः ॥ १३ ॥ स्तूयमानो मुनिगणैः सूतमागधवन्दिभिः । आजगाम वृतः सैन्यैः पुरीं द्वारवतीं हरिः ॥ १४ ॥ स प्रविश्य पुरीं रम्यां पताकाषण्डमण्डिताम् । अलङ्कृतामलङ्कारैः सिक्तसंमृष्टचत्वराम् ॥ १५ ॥ पूजितो यदुभिर्वृद्धैः पौरजानपदैस्तथा । रमयद्द्व्यष्टसाहस्रमहिषीः प्रेमविह्वलाः। उवास देवकीपुत्रः सानन्दं कुरुनन्दन ॥ १६ ॥”

१ विज० इदमर्धं नास्ति। २ वीर०दुर्मतेः। ३ उभ० पद्भ्यां महीं । ४ विज० प्रत्यगात् । ५ विज० कालिङ्गो । ६ विज० दिष्ट्या कृष्ण । ७ विज० एतच्छ्लोकमारभ्य “सुरमानवैः” इत्यन्तत्रयोदशश्लोकपर्यन्तानां नवश्लोकानां स्थाने किंचिद्भिन्नार्थकाः १५ श्लोका वर्तन्ते ते च तत्रैव मुद्रिता द्रष्टव्याः ।

गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात् ।
प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतद्व्यसुः ॥ ९ ॥
ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ।
पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १० ॥
विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ।
आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥११॥
तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ।
शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम्॥१२॥
एवं सौभं च शाल्वं च दन्तवक्रं सहानुजम् ।
हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः॥ १३[3] ॥
मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः ।
अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥१४॥

१ वीर० गाढनिर्भिन्न । २ वीर० नन्यानीडितः । ३ विज० त्वं मातुलेय इतिपञ्चमश्लोकमारभ्य त्रयोदशश्लोकपर्यन्तं विद्यमानानां नवश्लोकानां स्थाने १५ श्लोकाः किंचिद्भिन्नार्थकाः सन्ति । तेच—“त्वामद्य द्वन्द्वयुद्धेन हनिष्याम्यविलंबितम् । त्वं मातुलेयो नः कृष्ण मित्रध्रुक्पारदारिकः । विश्वासघाती बन्धुघ्नः सततं कलहप्रियः ॥ १ ॥ पौण्ड्रकं मातुलेयं मे सङ्ख्ये सूदितवानसि । रुक्मी च शिशुपालश्च भ्रातरौ मे त्वया हतौ ॥ २ ॥ अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया । तेनानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ ३॥ बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा । इति लोकप्रवादोस्ति तेन दोषोपि नास्ति मे ॥ ४ ॥ एवं रूक्षैश्च वचनैः कृष्णं तोत्रैरिव द्विपम् । गदयाऽताडयत्कृष्णं सिंहवद्व्यनदच्च सः ॥ ५ ॥ गदयाऽभिहतोप्याजौ न चचाल यदूत्तमः । गदया व्यहनद्गुर्व्या कौमोदक्या स्तनान्तरे ॥ ६ ॥ गाढनिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् । प्रसार्य केशबाह्वङ्घ्रि गतासुर्व्यपतद्भुवि ॥ ७ ॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् । पश्यतां सर्वभूतानां यथा चैद्यस्य सङ्गरे ॥ ८ ॥ भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथः । मूर्च्छितो भ्रातृशोकेनाप्यसिचर्म समाददे ॥ ९ ॥ अवप्लुत्य रथात्तूर्णं विधुन्वन्खड्गमुत्तमम् । अभिदुद्राव गोविन्दं पद्भ्यामुर्वीं प्रकंपयन् ॥ १० ॥ तस्य बाणेन चिच्छेद खड्गं यादवनन्दनः । ततो जग्राह निशितां शक्तिं घोरां विदूरथः ॥ ११ ॥ तया प्रहर्तुं गोविन्दमभिनिश्चित्य सङ्गरे । क्षणेनाभिससाराज्ञश्चापमुक्तो यथा शरः ॥१२॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना । शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ १३ ॥ एवं निहत्य समरे दन्तवक्रविदूरथौ । कालयामास तत्सैन्यं जगृहे वारणादिकम् ॥ १४ ॥ भूयः पुष्परथं दिव्यमारुह्य समलङ्कृतम् । सहितः सात्वतगणैरीडितः सुरमानवैः ॥ १५ ॥”

उपगीयमानविजयः कुसुमैरभिवर्षितः ।
वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतां पुरीम् ॥ १५ ॥
एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः ।
ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥१६॥
[राजोवाच— 95
स भाजयित्वा वहुधा श्रुतदेवं श्रियः पतिः ।
आगतो द्वारकां भूयः किं चकार महामुने ॥१॥
श्रीशुक उवाच—
उपप्लाव्यं गतान्पार्थान्गोग्रहे जितकौरवान् ।
शुश्राव तीर्णसमयान्वलेन महता वृतान् ॥ २ ॥
संप्रहृष्टमनाः कृष्णो महत्या सेनया वृतः ।
सात्यकिं कृतवर्माणमुद्धवं शठसारणौ ॥ ३ ॥
अभिमन्युं च सौभद्रं पुरस्कृत्य महामतिः ।
अक्षौहिण्या पृतनया सहितः सत्यसङ्गरः ॥ ४ ॥
शङ्खदुन्दुभिनिर्घोषैर्द्रष्टुं प्रायाद्युधिष्ठिरम् ।
सन्धिमिच्छन्कौरवाणां कुर्वाणं दौत्यमच्युतम् ॥५
मूढो ग्रहीतुमारेभे विनशिष्णुः सुयोधनः ।
स तत्रानन्तरूपत्वं दर्शयित्वा महाभुजः ॥ ६ ॥
कृत्वा विभीषिकां घोरां पाण्डवान्पुनराययौ ।
विवृद्धमत्सराः सर्वे राजानो जातमन्यवः ॥७॥
युद्धायैवानुयुज्यन्ते न सन्धिमनुकाङ्क्षिणः ।
युधिष्ठिरस्तु धर्मात्मा पुरस्कृत्य जनार्दनम् ॥८॥
कुरुक्षेत्रं ययौ राजन्युद्धाय भ्रातृभिः सह ।
अक्षौहिण्या विराटोपि मत्स्यराजो महामनाः॥९॥
युधिष्ठिरमनुप्रायात्सपुत्रः कुरुसत्तमः ।
द्रुपदश्च शिखण्डी च धृष्टद्युम्नश्च दुर्जयः ॥ १०॥
अक्षौहिणीभिस्तिसृभिरनुजग्मुर्युधिष्ठिरम् ।
अक्षौहिण्या परिवृतः सात्यकिर्युद्धलालसः॥११॥
नियोगाद्वासुदेवस्य प्रायादनु युधिष्ठिरम् ।
अक्षौहिण्या परिवृताः कैकयाः पञ्च भूभृतः १२
अनुजग्मुर्धर्मपुत्रं राजानं मातृसोदराः ।
धृष्टकेतुस्तदा राजा शैब्यश्च नरपुङ्गवः ॥ १३ ॥
अन्वयातां नृपश्रेष्ठावक्षौहिण्या युधिष्ठिरम् ।
ते गत्वा पाण्डवाः सर्वे नारायणपुरोगमाः॥१४॥
स्वैरमूषुः कुरुक्षेत्रे प्रतीक्षन्तः सुयोधनम् ।
सुयोधनोऽपि कौरव्य मानी भ्रातृशतैर्वृतः ॥१५॥
द्रोणभीष्मकृपद्रौणिकर्णबाह्लीकसौबलैः
हार्दीकसाल्वमद्रेशभगदत्तजयद्रथैः ॥ १६
अन्यैश्च राजशार्दूलैर्नानादेशसमुद्भवैः ।
शङ्खदुन्दुभिनिर्घोषैर्भेरीपटहनिःस्वनैः ॥ १७ ॥
पूरयन्ककुभो वीरः प्रययौ कंपयन्महीम् ।
ते समेत्य कुरुक्षेत्रे राजानः कुरुपाण्डवाः ॥१८॥
समन्तपञ्चके चक्रुर्व्यूहमुद्यति भास्करे ।
अक्षौहिण्यः कौरवाणामेकादश दुरात्मनाम् १९
सप्त पाण्डुसुतानां च कर्शितानां वने भृशम् ।
तथा व्यूहेष्वनीकेषु तावकेष्वितरेषु च ॥ २० ॥
गाण्डीवधन्वी कवची बद्धतूणतलत्रवान् ।
आरूढस्यन्दनः पार्थो ददर्श रिपुवाहिनीम्॥२१॥
उपाध्यायान्पितॄन्भ्रातॄन्मातुलान्स्वांस्तथान्सुतान् ।
शिष्यान्सपौत्रान्दौहित्राञ्शालान्संबंधिबान्धवान्
दृष्ट्वा निर्वेदमापन्नो हन्तुं नैवाकरोन्मनः ॥ २२ ॥
तं विपण्णमनश्चित्तं कृपालुमविघातिनम् ।
प्रबोध्य प्रेरयामास केशवो योगमायया ॥ २३ ।
त्यक्तशस्त्राय शान्ताय बन्धून्प्रति कृपालवे ।
दर्शयामास पार्थाय विश्वरूपं जनार्दनः ॥ २४॥
संबोधितः कंसभिदा तथा वासवनन्दनः ।
भूयो जग्राह कोदण्डं युद्धायाच्युतसारथिः॥२५।
प्रारब्धं भारतं युद्धं श्रुत्वा सङ्कर्षणो वली ।
अशक्नुवन्वारयितुं किं करोमीत्यचिन्तयत्॥२६।
प्रवृत्तं भारतं युद्धमवेक्ष्योद्वेगविह्वलः ।
तीर्थव्याजेन तत्याज रामः परिचितां भुवम् २७
सेनापतिः पाण्डवानां धृष्टद्युम्नो महारथः ।
गाङ्गेयो धार्तराष्ट्राणां वृद्धः कुरुपितामहः ।
स कुर्वन्नाहवं घोरं निहतो दशमेऽहनि ॥ २८ ।
भारद्वाजं ततो द्रोणं सैनापत्ये सुयोधनः ।
न्ययोजयत्स युयुधे दिवसान्पञ्च भूपते ॥ २९ ।
तस्मिन्युद्ध्यति दुर्धर्षे सैन्धवेन दुरात्मना ।
अभिमन्युस्तव पिता निहतो रणमूर्धनि ॥ ३० ॥

१ वीर० उद्गीयमान । २ विज० कुण्डलितः पाठोधिकः तद्रीत्या ९५ तमश्चायमध्यायः ।

## षडशीतितमोऽध्यायः ॥ ८६ ॥ 91

अर्जुनेन सुभद्राहरणं ॥ १ ॥ श्रीकृष्णेन बहुलाश्वश्रुतदेवयोरनुग्रहः ॥ २ ॥

**राजोवाच—**[1]
ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ।
यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥
**श्रीशुक उवाच—**
अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ।
गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥२॥
दुर्योधनाय रामस्तां दास्यतीति न चापरे ।
तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ३
तत्र[2] वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः ।
पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता[3] च सः ४
एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम् ।
श्रद्धयोपहृतं भैक्ष्यं बलेन बुभुजे किल ॥ ५ ॥
सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम्[4] ।
प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥६॥
साऽपि तं चकमे वीक्ष्य नारीणां हृदयंगमम् ।
हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥
तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ।
न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥८॥
महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ।
जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥९॥
रथस्थो धनुरादाय शूरांश्चारुन्धतो भटान् ।
विद्राव्य क्रोशतां स्वानां स्वभागं[5] मृगराडिव १०
तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ।
गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥११॥
प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ।
महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥
**श्रीशुक उवाच—**[6]
[अभवन्[7]प्रीतिसंहृष्टा बान्धवा यदुपाण्डवाः ।
अथान्यदपि कृष्णस्य वात्सल्यं भक्तयोः शृणु १]
कृष्णस्यासीद्द्विजश्रेष्ठः[1] श्रुतदेव इति श्रुतः ।
कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलंपटः १३
स उवास विदेहेषु मिथिलायां गृहाश्रमी ।
अनीहया गताहार्यनिर्वर्तितनिजक्रियः[2] ॥ १४ ॥
यात्रामात्रं[3] त्वहरहर्दैवादुपनमत्युत[4] ।
नाधिकं तावता[5] तुष्टः क्रियाश्चक्रे यथोचिताः १५
तथा तद्राष्ट्रपालोऽङ्ग[6] बहुलाश्व इति श्रुतः ।
मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥
तयोः प्रसन्नो भगवान्दारुकेणाऽऽहृतं रथम् ।
आरुह्य साकं[7] मुनिभिर्विदेहान्प्रययौ प्रभुः ॥१७॥
नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ।
अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः[8] ॥१८॥
तत्रतत्र तमायान्तं पौरा जानपदा नृप ।
उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥१९॥
आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्य-[9]
पाञ्चालकुन्तिमधुकेकयकोसलार्णाः ।
अन्ये च तन्मुखसरोजमुदारहास-
स्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २० ॥
तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः
क्षेमं त्रिलोकगुरुरर्थदृशं[10] च यच्छन् ।
शृण्वन्दिगन्तधवलं स्वयशोऽशुभघ्नं
गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥
तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ।
अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥
दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ।

---

१ विज० आद्या द्वादशश्लोकाः न दृश्यते । २ वीर० स तत्र । ३ वीर० रामेण च महात्मना । ४ वीर० मनोरमां । ५ वीर० स्वबलिं । ६ विज० एतदारभ्याऽऽध्यायसमाप्ति एकनवतितमोऽध्यायः ॥ ९१ ॥ ७ वीर० अयं श्लोकोऽधिको दृश्यते ।

१ विज० वृष्णिष्वासीद्यदुश्रेष्ठः । २ विज० हार्यो निर्वर्तितजपक्रियः । ३ विज० यावन्मात्रं । ४ विज० नमत्ययं । ५ विज० तपसा । ६ विज० पालोऽभूद्वहु । ७ विज० सहितो विप्रैर्नियतैर्ब्रह्मवादिभिः । ८ विज० मैत्रेयश्च पराशरः । ९ वीर० वङ्ग । विज० टङ्क । १० वीर० रथदृशं ।

[1]कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वास्तथा मुनीन् ॥२३॥
स्वानुग्रहाय [2]संप्राप्तं मन्वानौ तं जगद्गुरुम् ।
मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः॥२४॥
न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः ।
मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली ॥ २५ ॥
भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ।
उभयोराविशद्[3]देहैसुभाभ्यां तदलक्षितः ॥ २६ ॥
श्रोतुमप्यसतां दूराज्जनकः स्वगृहागतान् ।
आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः॥२७
प्रवृद्ध[4]भक्त्या उद्धर्ष हृदयास्राविलेक्षणः ।
नत्वा तदङ्घ्रीन्प्रक्षाल्य तदपो लोकपावनीः॥२८॥
सकुटुंबो वहन्मूर्ध्ना पूजयाञ्चक्र [5]ईश्वरान् ।
गन्धमाल्यांबराकल्पधूपदीपार्घगोवृषैः ॥ २९ ॥
वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ।
पादावङ्कगतौ [6]विष्णोः संस्पृशञ्छनकैर्मुदा ॥३०॥

**राजोवाच—**

भवान्हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो ।
[7]अथ नस्त्वत्पदांभोजं स्मरतां दर्शनं गतः ॥३१॥
स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ।
[8]यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥
को [9]नु त्वच्चरणांभोजमेवंविद्विसृजेत्पुमान् ।
निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः॥
योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ।
[10]यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ३४
नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे ।
नारायणाय ऋषये [11]सुशान्तं तप ईयुषे ॥ ३५ ॥
दिनानि कतिचिद्भूमन्गृहान्नो [12]निवस द्विजैः ।
समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥३६॥

इत्युपामन्त्रितो राज्ञा भगवाँल्लोकभावनः ।
उवास कुर्वन्कल्याणं मिथिलानरयोषिताम् ॥३७॥
श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा ।
[1]नत्वा मुनीन्सुसंहृष्टो धुन्वन्वासो ननर्त ह ॥३८॥
[2]तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ।
स्वागतेनाभिनन्द्याङ्घ्रीन्सभार्योऽवनिजे मुदा ॥३९
तदंभसा महाभाग आत्मानं स[3]गृहान्वयम् ।
स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥
[4]फलार्हणोशीरशिवामृतांबुभि-
र्मृदा सुरभ्या तुलसीकुशांबुजैः ।
आराधयामास यथोपपन्नया
सपर्यया सत्त्वविवर्धनान्धसा ॥ ४१ ॥
स तर्कयामास कुतो ममान्वभू-
द्गृहान्धकूपे पतितस्य सङ्गमः ।
यः सर्वतीर्थास्पदपादरेणुभिः
कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥
सूपविष्टान्कृतातिथ्याञ्छ्रुतदेव उपस्थितः ।
[5]सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ॥४३॥

**श्रुतदेव उवाच—**

[6]नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ।
[7]यर्हीदं शक्तिभिः सृष्ट्वा [8]प्रविष्टो ह्यात्मसत्तया ४४
यथा शयानः पुरुषो मनसैवाऽऽत्ममायया ।
सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥४५॥
शृण्वतां गदतां [9]शश्वदर्चतां त्वाऽभिवन्दताम् ।
[10]नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥४६॥
हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ।
आत्मशक्तिभिरग्राह्योऽप्यन्त्[11]युपेतगुणात्मनाम् ४७
नमोऽस्तु तेऽध्यात्मविदां परात्मने

---

१ वीर० निबद्धाञ्जलिभिः । विज० उद्धृताञ्जलिभिः । २ विज० सत्यभूतं जगद्गुरुं । ३ विज० द्वेहं रूपाभ्यां । ४ विज० भक्त्युत्कर्षं । ५ विज० ईश्वरं । ६ विज० विष्णोरामृजञ्छनकै । ७ वीर० अद्य । ८ विज० यदा ह्येकान्तभक्तानामात्माऽनन्तोऽरजाः प्रियः । ९ विज० किं नु । १० वीर० यशोऽचिनोत्स्वं । ११ वीर० संशान्तं तप । विज० स्वशान्ततप । १२ वीर० निवसन्द्विजैः । विज० निवसन्निजैः ।

१ विज० मत्वा । २ विज० तृणपीठे सशिष्यांस्तानास्तृतेषूपवेश्य सः । ३ वीर० सगृहान्स्वयं । ४ विज० सिद्धार्हणोशीर । ५ वीर० सभार्यः स्वगृहापन्नमुवाचा । ६ वीर० सोद्य नो । विज० अद्य नो । ७ उभ० य इदं । ८ विज० विभजत्यात्म । वीर० प्रविष्टोन्वात्म । ९ विज० शश्वद्दर्शिनामभिनन्दतां । १० वीर० नृणां संवसतां नित्यं हृदिस्थोयोऽमलात्मनां । ११ विज० ह्यर्थाकारो गुणात्मकः ।

नात्मने खात्मविभक्तमृत्यवे ।
कारणाकारणलिङ्गमीयुषे
मायया ऽसंवृतरुद्धदृष्टये ॥ ४८ ॥
स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ।
एतदन्तो नृणां क्लेशो यद्भवानक्षगोचरः ॥४९॥

**श्रीशुक उवाच—**

तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ।
गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥५०॥

**श्रीभगवानुवाच—**

ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विध्यमून्मुनीन् ।
संचरन्ति मया लोकान्पुनन्तः पादरेणुभिः ॥५१
देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ।
शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥
ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ।
तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥५३
न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥
दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः
गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥५५॥
चराचरमिदं विश्वं भावा ये चास्य हेतवः ।
मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥५६॥
तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ।
एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥

**श्रीशुक उवाच—**

स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान्द्विजोत्तमान् ।
आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥५८॥
एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ।
उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥५९

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

श्रुतिगीता ॥ १ ॥

**परीक्षिदुवाच—**

ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥

**श्रीशुक उवाच—**

बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥२
सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३॥
अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥
एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥
यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ।
धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥
तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।
परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥
तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ।
यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥८॥

१ वीर० युक्तात्मने। विज० सर्वात्मने स्वात्मविभक्तमूर्तये। २ विज० ऽसंवृतदृष्टये नमः। ३ वीर० करवाम ते। ४ वीर० नक्षिगोचरः। ५ वीर० पुनन्ति चिरकालेन। विज० लोकान्पुनन्ति कालेन। ६ विज० जन्मतः श्रेयान्। ७ विज० अयमध्यायः चतुर्नवतितमः। ८ वीर० गच्छत्यकिञ्चनः।

१ विज० मत्कथया। २ विज० मर्चादावितिदृष्टयः। ३ वीर० मद्रूपाणीति वैतानि। विज० मद्रूपाण्येभिरेतस्यां। ४ वीर० ब्रह्मन्संश्रद्धया। ५ उभ० सुविभूतिभिः। ६ विज० ध्यैकान्तभावेन मैथिलश्चापतुर्गतिं। ७ विज० एकनवतितमोध्यायः। ८ वीर० शमोपेत आकल्पा। विज० शमोपेतः साकल्या। ९ उभ० तस्मा अवोच। १० वीर० मिमं। विज० मिमां।

**श्रीभगवानुवाच—**
स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ।
तत्रस्थानां[1] मानसानां मुनीनामूर्ध्वरेतसाम् ॥९॥
श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्[2] ।
ब्रह्मवादः सुसंवृत्तः[3] श्रुतयो यत्र शेरते ।
तत्र[4] हाऽयमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥१०॥
[परिहारांश्च[5] तान्सर्वान्वक्ष्येऽहं शृणु तेऽनघ ।]
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।
अपि चक्रुः प्रवचनमेकं[6] शुश्रूषवोऽपरे ॥ ११ ॥
**सनन्दन उवाच—**
स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः[7] श्रुतयः परम् ॥१२॥
यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः॥१३॥
**श्रुतय[8] ऊचुः—**
जयजय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः १४
बृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदिवाऽविकृतात् ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् १५
इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपण कथाऽमृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥१६॥
दृतय इव श्वसन्त्यसुभृतो[9] यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन्यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥
उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम्
तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥१८॥
स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्त्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥१९॥
स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः[1] ॥२०॥
दुरवगमात्मतत्त्वनिगमाय[2] तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २१ ॥
त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न बत रमन्त्यहो असदुपासनाऽऽत्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २२ ॥
निभृतमरुन्मनोऽक्ष[3]दृढयोगयुजो हृदि
यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥२३॥
क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।
तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य[4] शयीत यदा २४॥
जनिमसतः सतो मृतिमुताऽऽत्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ।

१ उभ० तत्रस्थानां । २ विज० तमीश्वरं । ३ वीर० संप्रवृत्तः । ४ विज० तत्राप्ययं । ५ वीर० इदमर्धमधिकं । ६ वीर० प्रवचन एकं । ७ विज० एतदारभ्याऽऽध्याय-समाप्ति पाठभेदोऽधिको वर्तते तस्मात्स पृथगेवाध्यायान्ते टिप्पनस्थाने मुद्रितः । ८ वीर० गुणत्वमसि । ९ वीर० न्त्यसुतृपो ।

१ वीर० निःश्वसिताः । २ वीर० दुरधिगमात्म । ३ वीर० मनोक्ष । ४ वीर० मपकृष्य ।

त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥ २५ ॥
सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजा-
त्सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः ।
न हि विकृतिं त्यजन्ति कनकस्य तदाऽऽत्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ २६ ॥
तव परि ये चरन्त्यखिलसत्त्वनिकेततया
त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।
परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः॥
त्वमकरणः[1] स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ।
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः॥२८॥
स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्ततः ।
न हि परमस्य कश्चिदपरो न परश्च भवे-
द्वियत इवाऽऽपदस्य तव शून्यतुलां दधतः॥२९॥
अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवे-
त्सममनुजानतां[2] यदमतं मतदुष्टतया ॥ ३० ॥
न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।
त्वयि त इमे ततो विविधनामगुणैः परमे
सरित इवार्णवे मधु निलिल्युरशेषरसाः ॥ ३१ ॥
नृषु तव मायया भ्रममभीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।
कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ ३२ ॥
विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तु मतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाजं[1] सन्त्यकृतकर्णधरा जलधौ ॥ ३३ ॥
स्वजनसुतात्मदारधनधामधरासुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति कोन्विह स्वविहते[2] स्वनिरस्तभगे ॥३४॥
भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदांबुजहृदोऽघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥ ३५ ॥
सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोऽन्धपरंपरया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥३६
न यदिदमग्र आस न भविष्यदतो निधना-
दनुमितमन्तरा त्वयि विभाति मृषैकरसे ।
अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ ३७॥
स यदजया त्वजामनुशयीत गुणांश्च जुष-
न्भजति सरूपतां तदनु मृत्युमपेतभगः ।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥
यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगव-
न्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९ ॥
त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
र्गुणविगुणान्वयांस्तर्हि[3] देहभृतां च गिरः ।
अनुयुगमन्वहं सगुणगीतपरंपरया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥
द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-

---

[1] वीर० इवाविशन्त्यकृत । [2] वीर० स्वपिहिते ।
[3] वीर० स्तर्हिन देह ।

**स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः॥४१[1]।**

**श्रीभगवानुवाच—**

**इत्येतद्ब्रह्मणः पुत्रा आश्रुत्याऽऽत्मानुशासनम् ।**
**सनन्दनमथाऽऽनर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम्**

---

१ विज० चतुर्दशं श्लोकमारभ्यैतत्पर्यन्तं २८ श्लोका भिन्नपाठा वर्तन्ते । तेचः—**श्रुतय ऊचुः ।** जयजय जह्यजामजित दोषगृहीतगुणांस्त्वमसि यदात्मना समवरुद्धसमस्तभगः । अज जगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मनाऽनुचरतोऽनुचरेन्निगमः ॥१॥ बृहदुपलब्धमेतदवशेषतया यत उदगास्तमस्यविकृते विकृतः । अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥२॥ इति सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणं तव कथामृताब्धिमवगाह्य तपांसि जहुः । किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥३॥ दृतय इवोच्छ्वसन्त्यसुहृदो यदि ते महदहमादयोण्डमसृजन्यदनुग्रहतः । पुरुपविधान्वयोत्र चरमोत्तममध्यमादिषु यस्तव सदसतः परं प्रथयेदविशेषमृतम् ॥ ४ ॥ उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृशः परिसरपद्धति हृदयमारुणयो दहरम् । तत उदगाच्च नन्दनपथाऽथ शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ ५ ॥ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया भरतमतश्चकास्त्यनलवत्स्वकृतानुकृतिः । अपि वितथास्वमूष्ववितथोरुविधं मनसि निकटधियो नयन्त्यभिविपत्य तव ॥ ६ ॥ प्रक्रमवत्स्वसत्कृतं सर्वेषु पुरुषेषु सर्वासु धीषु स्थित्वा त्वां तु बहिरन्तरसञ्चरणेऽपि । तव पुरुष वदन्त्यखिलशक्तिधृतः स्वकृतं ॥ ७ ॥ इति विमृशन्ति कवयो निगमावपनं यजन्त उपासते भवमध्यविनिःश्वसिताः । दुरवगमात्मतत्वनिगमायतवाङ्मनसश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥८॥ न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः । त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरन्ति तथोन्मुखास्त्वयि हि ते प्रिय आत्मनि च ॥ ९ ॥ न च रमन्त्यहो असदुपासनयात्महनो यदनुशया भ्रमन्त्यभवाः कुशरीरभृतः । निभृतमोक्षहृदययोगयुजो हृदयं मुनय उपासते तदरयोपि ययुः स्मरणात् ॥ १० ॥ स्वनुराग तद्भवानुरगेन्द्रभोगदण्डविपक्तधियो वयमपि ते समासमदृशोङ्घ्रिसरोजसुधाम् । क इह वेद नु वक्तुमुपेतजन्मलयो यत उदगादृषिरनुदेवगणा उभये ॥ ११ ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमपकृष्य शयीत यदा । जनिमसतः सतो मृतिमजात्मनि ये च भिदां विपणमृते स्मरन्त्युपविशध्वनिमारुवतः ॥ १२ ॥ त्रिगुणमयः पुमानिति यदबोधकृता त्वयि न तु भवेत्तदवबोधरसे । सदिव मनस्त्रिवृत्त्वयि भवत्यसतां मनुजादयो विमृशन्त्यशेषमिदमार्ततयाऽऽत्मविदः ॥ १३ ॥ न हि विकृतं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्ट इदमात्मतया रसितम् । तव ये परिचरन्त्यखिलतत्वनिकेततया ननु ते पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥ १४ ॥ परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि दृढसौहृदा ननु पुनन्ति न ते विमुखाः । त्वमेकः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्ति च येऽनिमिषाः ॥ १५ ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः । स्थिरचरजातयः स्युरज येत्वनिमित्तयुजो विरह उदीक्षयेद्यदि परस्य विमुक्तसतः ॥ १६ ॥ न हि परमस्य कश्चिदपरो न परस्य भवेद्वियत इवात्र यस्य शून्यतुलसंदधतः । अपरिमिता ध्रुवास्तनुभृतो यदि सर्व ततो न हि न शास्यतेति नियमो ध्रुवते च तथा ॥ १७ ॥ अजनपरिमुच्यतेत्र भवात्सततात्सममनुजानता ततमनन्तमदुष्टतया । न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजोर्भवन्त्यसुभृतो जलबुद्बुदवत् ॥ १८ ॥ त्वयि त इमे ततो विबुधनामगुणाः परमेऽमृत इवार्णवे मधु निलिल्युरशेषरसाः । नृषु तव मायया स्वगतया कुशलं त्वयि सुधियोङ्गभेदमनुधातुमनुप्रभवः । कथमनुवर्तिनां भवभयं तव भ्रुकुटी सृजति मुहुर्नृणाम् ॥ १९ ॥ इह भवच्चरणेषु सुजातभुवोजितहृषीकवायुभिरुदात्तमहत्तुरगैः । य इह यतन्त्यनतिलोलमुपायविदो व्यसनशताब्धितारमपहाय गुरोश्चरणम् ॥ २० ॥ वणिज इवोच्छ्वसन्त्यकृतकर्णधरा जलधौ स्वजनसुतात्मदारधनधामधराः । सुखशान्तिमति त्वयि हि सन्ति न तानि नृणां विभव उद्यति श्रयत आत्मनि सर्वरसे ॥ २१ ॥ इति सदजानतां मिथुनतो रतये चरतां सुखयति कोन्विहाद्य विजने स्वनिरस्तभगे । भुवि पुण्यतीर्थसदना ह्यृषयो निविशन्त्यतस्त्वानुभवतः पदांबुजं हृदाघभिदं दधति । सकृन्मनस्त्वयि चिदात्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथम् ॥ २२ ॥ इदमप्यथो वदन्ति चेन्ननु तर्का व्यभिचरन्ति क्वचित्क्वचिन्मृषा च । ततो भयदृग्व्यवहितये विकल्प उषितोन्वहमन्धपरंपरया भ्रमति भारती च तवोरुवृत्तिभिरूढजवा ॥ २३ ॥ न यदिदमग्र आस न भविष्यदतो निधनादनिमित्तकमन्तरा त्वयि विभाति मृषैकरसे । अत उपगीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमिदमित्यवयन्ति बुधाः ॥ २४ ॥ उदगात्पुमाननुगीतगुणांश्च जुषन्भजति सरूपतां तदनु त्वमुत जहासि जिहासिताम् । अहिरिव त्वचं परमात्तभगां महसि महीयसेऽष्टगुणोऽपरिमेयभगः ॥ २५ ॥ यदि न समुच्चरन्ति यतयोपि हृदि कामजडाद्दुरधिगमोऽसतां हृदिगतोऽस्मृतकण्ठमणिः । अनुतृप्तयोगिनामभयो भगवन्नवगतान्तकादनधिरूढपदाद्भवतः ॥ २६ ॥ तदवगमार्थसितासितयोर्गुणविगुणयोर्नहि देहभृतां स गिरः । अनुययुरत्र हंसकुलगीतपरंपरया न तुषावरणा इव रजांसि वान्ति । वयसा सह यच्छ्रुतयस्त्वयि सफलं पतन्ति न पतन्ति बन्धनाः ॥ २७॥

इत्यशेषसमाम्नायपुराणोपनिषद्रसः ।
समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥
त्वं चैतद्ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम् ।
धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ४४
श्रीशुक उवाच—
एवं स ऋषिणाऽऽदिष्टं गृहीत्वा श्रद्धयाऽऽत्मवान् ।
पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ४५ ॥
नारद उवाच—
नमस्तस्मै भगवते कृष्णायामलकीर्तये ।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥४६॥
इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ।
ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥४७॥
सभाजितो भगवता कृतासनपरिग्रहः ।
तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥
इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया ।
यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥४९॥
योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्तिताः
यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ५०

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे सप्ताशीतितमोऽध्यायः ॥ ~~८७~~ ॥ 94

## अष्टाशीतितमोऽध्यायः ॥ ~~८८~~ ॥ 9[illegible]

विष्णुभक्तएव मोक्षमाप्नोति । इतरदेवताभक्तस्तु मोक्षेतरफलमेव । इत्यत्र वृकासुरोपाख्यानं ॥ १ ॥

राजोवाच—
देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।
प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम्
एतद्वेदितुमिच्छामः संदेहोऽत्र महान्हि नः ।
विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥२॥
श्रीशुक उवाच—
शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥
ततो विकारा अभवन् षोडशामीषु कंचन ।
उपधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥ ४ ॥
हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ५ ॥
निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ।
शृण्वन्भगवतो धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥
स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ।
नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ७
श्रीभगवानुवाच—
यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ।
ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम् ८
स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ।
मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥
तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ।
अतो मां सुदुराराध्यं हित्वाऽन्यान्भजते जनः १०
ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ।
मत्ताः प्रमत्ता वरदान्विस्मरन्त्यवजानते ॥ ११ ॥
श्रीशुक उवाच—
शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ।

---

१ विज० धारयन्भज मे कामं कामानां निधनं नृणां । २ उभ० स गुरुणा । ३ विज० ऽऽदिष्टो । ४ विज० सद्यस्ततो राजन् । ५ विज० गुरुं । ६ विज० मलमूर्तये । ७ विज० ब्रह्मव्रतु । ८ विज० पञ्चसु । ९ विज० उपाधावन् । १० विज० विरिस्तु ।

१ उभ० मामन्त्र्य । २ वीर० मुखाच्युतं । ३ विज० न्यश्च । ४ विज० येन । ५ विज० यो ह्यात्मा जगदादिमध्यनिधनो । ६ विज० पुनः संहितां । ७ विज० तथा । ८ विज० चतुर्नवतितमोऽध्यायः ॥९४॥ ९ वीर० स तदा । १० विज० तदनुग्रहं । ११ वीर० तस्मै ब्रह्म । १२ विज० प्रमत्ता वरदान्देवान् । १३ वीर० कोप ।

सद्यः शापप्रसादोङ्ग शिवो ब्रह्मा न चाच्युतः१२
अत्रं चोदाहरन्तीममितिहासं पुरातनम् ।
वृकासुराय गिरिशो वरं दत्त्वाऽऽप संकटम् १३
वृको नामासुरः पुत्रः शकुनेः पथि नारदम् ।
दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥१४॥
स आह देवं गिरिशमुपाधावाऽऽशु सिध्यसि ।
योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति
दशास्यबाणयोस्तुष्टः स्तुवतोर्वन्दिनोरिव ।
ऐश्वर्यमतुलं दत्त्वा तत आप सुसङ्कटम् ॥ १६ ॥
इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः ।
केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम्॥१७॥
देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ।
शिरोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम्॥१८॥
तदा महाकारुणिकः स धूर्जटि-
र्यथा वयं चाग्निरिवोत्थितोऽनलात् ।
निगृह्य दोर्भ्यां भुजयोर्न्यवारय-
त्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ १९ ॥
तमाह चाङ्गालमलं वृणीष्व मे
यथाऽभिकामं वितरामि ते वरम् ।
प्रीयेय तोयेन नृणां प्रपद्यता-
महो त्वयाऽऽत्मा भृशमर्द्यते वृथा ॥ २० ॥
देवं स वव्रे पापीयान्वरं भूतभयावहम् ।
यस्ययस्य करं शीर्ष्णि धास्ये स म्रियतामिति २१
तच्छ्रुत्वा भगवान् रुद्रो दुर्मना इव भारत ।
ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥ २२ ॥
इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः ।
स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः ।

१ उभ० अत्रैवो । २ विज० मुपधावस्व सिद्धये । ३ उभ० सोल्पाभ्यां । ४ विज० त्सुयन्त्रितः । ५ विज० जुह्वन्नग्नि । ६ विज० शिरोजिहीर्षुरसिना स तीर्थक्लिन्नमूर्धजः । ७ वीर० यथाऽरणावग्निरिवोत्थितोऽनलात् । विज० यथाऽव्ययव्यग्निरिवोत्थितोऽनलात् । ८ विज० उपाकृता । ९ उभ० यथा निकामं । १० विज० शिवेन जीवेन । ११ उभ० देवात्स वव्रे । १२ विज० यस्य पुंसः । १३ विज० ददौ वरमृतं यथा । १४ उभ० इदमर्धं नास्ति । १५ विज० शीर्ष्णि वृकासुरः ।

स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः॥२३
तेनोपसृष्टः संत्रस्तः पराधावत्सवेपथुः ।
यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् ॥२४॥
अजानन्तः प्रतिविधिं तूष्णीमासन्सुरेश्वराः ।
ततो वैकुण्ठमगमद्भास्वरं तमसः परम् ॥ २५ ॥
यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ।
शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः॥२६
तं तथा व्यसनं दृष्ट्वा भगवान्वृजिनार्दनः ।
दूरात्प्रत्युदियाद्भूत्वा वटुको योगमायया ॥२७॥
मेखलाजिनदण्डाक्षैस्तेजसाऽग्निरिव ज्वलन् ।
अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥२८

**श्रीभगवानुवाच—**

शाकुनेय भवान्व्यक्तं श्रान्तः किं दूरमागतः ।
क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् २९
यदि नः श्रवणायाऽलं युष्मद्व्यवसितं विभो ।
भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान्समीहते॥३०॥

**श्रीशुक उवाच—**

एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ।
गतक्लमोऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम् ॥ ३१ ॥

**श्रीभगवानुवाच—**

एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ।
यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट्॥३२
[रुषा क्रान्तशरीरोऽसौ न सत्यं वदते हरः ।
क्रोधयुक्ते कुतः सत्यं मूढोऽसि त्वं महासुर॥१॥]
यदि वस्तत्र विश्रंभो दानवेन्द्र जगद्गुरौ ।
तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम्॥३३॥
यद्यसत्यं वचः शंभोः कथञ्चिद्दानवर्षभ ।
तदैनं जह्यसद्वाचं न यद्वक्ताऽनृतं पुनः ॥ ३४ ॥

१ विज० कोष्ठानामुदरं भुवः । २ विज० दूरात्प्रत्युदितो भूप दारको योगमायया । ३ विज० दण्डाद्यै । ४ वीर० तमाशीर्वादयामास । ५ विज० पुरुषः साधो पुंभिः स्वार्थं समीहते । ६ विज० एकः श्लोकोऽधिकः । ७ विज० हस्तन्यासः प्रदीयतां । ८ वीर० न तद्वक्ता । विज० न च वक्ता ।

इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः ।
भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्व्यधात्॥
अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ।
जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि ३६
मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ।
देवर्षिपितृगन्धर्वा मोचितः संकटाच्छिवः ॥३७॥
मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः ।
अहो देव महादेव पापोऽयं स्वेन पाप्मना॥३८॥
हतः कोनु महत्स्वीश जन्तुर्वै कृतकिल्बिषः ।
क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ॥३९॥
य एवमव्याकृतशक्त्युदन्वतः
परस्य साक्षात्परमात्मनो हरेः ।
गिरित्रमोक्षं कथयेच्छृणोति वा
विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे अष्टाशीतितमोऽध्यायः॥ ~~८८~~ ॥ 99.

## एकोननवतितमोऽध्यायः ॥ ~~८९~~ ॥ 100

देवेषु क उत्तम इति संशये भृग्वादिभिः परीक्ष्य विष्णुरेव सर्वोत्तम इति ख्यापनम् ॥ १ ॥

**श्रीशुक उवाच—**
सरस्वत्यास्तटे राजन्नृषयः सत्रमासत ।
वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥१॥
तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ।
तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम्२
न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया ।
तस्मै चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा ॥ ३ ॥
स आत्मन्युत्थितं मन्युमात्मजायाऽऽत्मना प्रभुः ।
अशीशमद्यथा वह्निं स्वयोन्या वारिणाऽऽत्मभूः ॥४
ततः कैलासमगमत्स तं देवो महेश्वरः ।
परिरब्धुं समारेभ उत्थाय भ्रातरं मुदा ॥ ५ ॥
नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ।
शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ ६ ॥
पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ।
[इतिकृच्छ्रात्ततोमुक्तः कैलासाद्रजताचलात् ।]
अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥ ७॥
शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ।
तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः ॥८
स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ।
आह ते स्वागतं ब्रह्मन्निषीदात्राऽऽसने क्षणम् ।
अजानतामागतान्वः क्षन्तुमर्हथ नः प्रभो ॥९॥
अतीव कोमलौ तात चरणौ ते महामुने ।
इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन पाणिना॥१०॥
पुनीहि सह लोकं मां लोकपालांश्च मद्गतान् ।
पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥११॥
अद्याहं भगवल्लँक्ष्म्या आसमेकान्तभाजनम् ।
वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः॥ १२ ॥
[श्रीवत्समिति नामापि जायतां पादलक्षणः ।]
**श्रीशुक उवाच—**
एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ।
निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः १३
पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ।
स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥ १४ ॥
तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।

१ वीर० वचोभिः स्मयपेशलैः । विज० वचोभिश्च सुपेशलैः । २ विज० ब्रह्मणे स्तोत्रं । ३ विज० विशमयेद्वारिणा प्रभुः । ४ विज० नैच्छत्तमशुभाचार इति । ५ विज० इदमर्धमधिकं । ६ विज० मुनिर्जगाम ।

१ विज० कुतश्चापि जन्तुर्वै । २ विज० कृतपापो । ३ विज० गिरीश । ४ विज० द्विनवतितमोऽध्यायः ॥ ९२ ॥ ५ विज० अजानतामागसं नः क्षन्तुमर्हसि मानद । ६ उभ० अयं श्लोको नास्ति । ७ विज० भगवंस्तिर्थानां । ८ विज० नो भूतिर्भवत्पादहतांहसि । ९ विज० इदमर्धमधिकं । १० विज० स्तत्सार्द्रया गिरा ।

भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम्॥१५
धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम्।
ऐश्वर्यं चाष्टधा यस्माद्यशश्चाऽऽत्ममलापहम् ॥१६
मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम्।
अकिञ्चनानां साधूनां यमाहुः परमां गतिम् १७
सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः।
भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः १८
त्रिविधा[1] कृतयस्तस्य[2] राक्षसा असुराः सुराः।
गुणिन्या[3] मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम्१९
श्रीशुक उवाच—
एवं[4] सारस्वता विप्रा नृणां संशयनुत्तये।
पुरुषस्य पदांभोजसेवया तद्गतिं गताः ॥ २० ॥
सूत उवाच—
इत्येतन्मुनितनयास्यपद्मगन्ध-[5]
पीयूषं भवभयभित्परस्य पुंसः।
सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं[6]
पान्थोऽध्वभ्रमणपरिश्रमं[7] जहाति ॥ २१ ॥
श्रीशुक[8] उवाच—
एकदा[9] द्वारवत्यां तु विप्रपत्न्याः कुमारकः।
जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥२२
विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः।
[श्रीशुक उवाच—[10]
कदाचिद्वाजिमेधेन यष्टुमुद्यम्य केशवः।
महीं प्रदक्षिणीकर्तुं प्राहिणोत्प्रोक्षितं हयम् ॥१॥
हार्दिक्यं कृतवर्माणं युयुधानं च सात्यकिम्।
चारुदेष्णं सुदेष्णं च प्रद्युम्नं सांबमेवच ॥ २ ॥
अंशुमन्तं सुभानुं च बहुसैन्यांश्च यादवान्।
रक्षणार्थं तुरङ्गस्य प्राहिणोद्यदुनन्दनः ॥ ३ ॥
ते वै प्रदक्षिणं कृत्वा वसुधां प्रोक्षितं हयम्।
उपानिन्युरदीर्घेण कालेन भरतर्षभ ॥ ४ ॥
यष्टुकामं हरिं श्रुत्वा हयमेधेन भारत।
आजग्मुर्दीर्घतपसो मुनयः संशितव्रताः ॥ ५ ॥
होतारं च तथाऽध्वर्युमुद्गातारं च केशवः।
कल्पयित्वा यथान्यायं तथान्यानपि ऋत्विजः ॥६
ऋषिभिर्ब्राह्मणश्रेष्ठैर्यज्ञविद्याविचक्षणैः।
दीक्षां प्रपेदे भगवान्कृतपुण्याहमङ्गलः ॥ ७ ॥
तमुपास्तुं महीपाला नानाजनपदेश्वराः।
आजग्मुर्देवसङ्काशाः किरीटमुकुटोज्ज्वलाः ॥८॥
पाण्डवाश्च महीपाल यज्ञदर्शनमिच्छवः।
आहूता वासुदेवेन द्वारकामाययुर्नृप ॥ ९ ॥
तस्मिंस्तथा वर्तमाने हयमेधमहोत्सवे।
आसंस्तृप्ता द्विजा भोज्यवस्त्रगोभूमिकाञ्चनैः॥१०
दीक्षां प्रविश्य गोविन्दः कामैस्तर्पयति द्विजान्।
भुञ्जानेषु द्विजाग्रेषु प्रत्यगृह्णत्सुवाञ्छितम्॥११॥
आसीनेषु यथायोगं भूपालेषु समन्ततः।
वदत्सु मा शब्द इति वेत्रझर्झरपाणिषु ॥ १२ ॥
तृणमूलधरः कश्चिद्ब्राह्मणोऽभ्येत्य सत्वरः।
चुक्रोश आर्त उद्बाहुर्यज्ञवाटमुखे स्थितः ॥१३॥
क्षुत्क्षामकण्ठः शुष्कास्यो गलद्बाष्पाकुलेक्षणः।]
इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥ २३ ॥
ब्रह्मद्विषः शठधियो लुब्धस्य[1] विषयात्मनः।
क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः[2] ॥२४
हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम्।
प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः॥
एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च।
विसृज्य[3] स नृपद्वारि तां गाथां समगायत॥२६॥

१ विज० चतुर्विधं। २ विज० मूर्तयस्तस्य। ३ विज० गुणास्तन्मायया सृष्टाः सत्वं तत्रार्थदर्शनं। ४ उभ० इत्थं। ५ वीर० पद्मगन्धि। विज० पद्मगर्भ। ६ उभ० पिबन्नभीक्ष्णं। ७ विज० पान्थोऽथ। ८ विज० अत्र त्रिणवतितमोध्यायः ॥९३॥ ९ विज० एतदाद्यर्धत्रयं नास्ति। १० विज० एतदारभ्य सार्धत्रयोदशश्लोकाःअधिकाः। इयंकथा शततमेऽध्याये वर्तते।

१ वीर० लुब्धस्याविजितात्मनः। २ विज० गताः सुताः। ३ विज० एतदादिसार्धश्लोकस्थाने चत्वारः श्लोका वर्तन्ते ते च—इत्युक्त्वा स पुनश्चैव चुक्रोश भृशदुःखितः। तदाकर्ण्यार्जुनो मानी समुत्थाय वरासनात् ॥१॥ अपृच्छत्स्वयमासाद्य ब्राह्मणं केशवान्तिकात्। किमासन्नर्भका ब्रह्मंस्तव केनासि दुःखितः ॥ २ ॥ ब्रूहि तत्त्वमशेषेण त्वामद्य सुखयाम्यहं। इत्युक्तो ब्राह्मणः आह जातो जातोऽर्भको मम ॥ ३ ॥ नीयते तात केनापि तत्क्षणे सूतिकागृहात्। तदाकर्ण्यार्जुनः प्राह स्मयमान इव द्विजं ॥ ४ ॥

तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके ।
परेते नवमे बाले ब्राह्मणं समभाषत ॥ २७ ॥
किंस्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः ।
राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमासते ॥ २८ ॥
धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः ।
ते वै राजन्यवेषेण नटा जीवन्त्यसुंभराः ॥२९॥
अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ।
अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥३०॥
ब्राह्मण उवाच—
सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।
अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥३१
तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः ।
चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥३२
अर्जुन उवाच—
नाहं सङ्कर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च ।
अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः३३
मावमंस्था मम ब्रह्मन्वीर्यं त्र्यंबकतोषणम् ।
मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ३४
[इति विस्रंभयित्वा तं कृष्णमाहार्जुनो नृप ।
अनुज्ञां देहि भगवन्ब्राह्मणार्थे प्रयास्यतः ॥ १ ॥
यजतां वाजिमेधेन भवानेभिर्महात्मभिः ।
इति ब्रुवन्तं बीभत्सुमनुज्ञां प्रेप्सुमच्युतः ॥ २ ॥
बद्धतूणं सगाण्डीवं स्मयमानोऽब्रवीद्वचः ।
श्रीभगवानुवाच—
अहमेवागमिष्यामि न त्वया शक्यतेऽर्जुन ।
तमसाधारणं भूतं मन्ये येन हतोऽर्भकः ॥ ३ ॥
अर्जुन उवाच—
सलोकपालो देवेन्द्रः खाण्डवे विजितो मया ।
किरातरूपी युद्धेन तोषितश्च त्रियंबकः ॥ ४ ॥
निवातकवचाश्चैव वासवेनापि दुर्जयाः ।
मयैव निहताः सङ्ख्ये हिरण्यपुरवासिनः ॥ ५ ॥
तेभ्योऽधिकतरं भूतं किंनु दानवसूदन ।
विभीषयसि मां कस्मादनुज्ञां देहि सांप्रतम् ॥६॥
श्रीशुक उवाच—
इत्युक्तः प्रददौ कृष्णस्त्वनुज्ञां सव्यसाचिने ।
निर्ययौ यज्ञशालायाः स गृहीतशरासनः ॥ ७ ॥
रथमास्थाय विपुलं समुच्छ्रितकपिध्वजम् ।
अग्रे ब्राह्मणमारोप्य तद्ग्राममभितो ययौ ॥ ८ ॥
तत्र गत्वा प्रविष्टायां तत्पत्न्यां सूतिकागृहम् ।
ब्राह्मणं प्राह बीभत्सुरवरोप्य रथान्नृप ॥ ९ ॥
अर्जुन उवाच—
याहि स्वभवनं ब्रह्मन्नभयं तव सर्वतः ।
दत्तं मयाद्य तद्वीतां पत्नीमाश्वासयाशु ते॥१०॥]
एवं विश्रंभितो विप्रः फाल्गुनेन परंतप ।
जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥३५॥
प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ।
पाहिपाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥३६॥
[श्रीशुक उवाच—
इत्युक्तो रथमारुह्य सज्जं कृत्वा तु गाण्डिवम् ।
त्वरञ्जगाम बीभत्सुः सूतिकाभवनान्तिकम् ॥१॥
ब्राह्मणोऽपि प्रविश्याह मुहूर्ते सूतिकागृहे ।
गते तु पाहिपाहीति मृत्योरर्जुनमातुरः ॥ २ ॥]
स उपस्पृश्य शुच्यंभो नमस्कृत्य महेश्वरम् ।
दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे ॥
न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ।
तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥
ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ।
सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥
तदाऽह विप्रो विजयं विनिन्दन्कृष्णसन्निधौ ।
मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥४०॥
न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ।

१ विज० किं ब्राह्मण त्वन्निवासे । २ विज० राजन्यबन्धोरेवैते । ३ विज० त्मजैर्भृत्या । ४ विज० पश्य कार्मुकं । ५ विज० प्यानयिष्ये तव प्रजाः । ६ विज० दश श्लोका अधिकाः ।

१ विज० जगाम स्वगृहे प्रीत्या पार्थवीर्यं निशाम्य तत् । २ विज० प्रोवाच द्रुतमभ्येत्य पार्थं शस्त्रभृतां वरं । एहि पार्थ महाबाहो यत्तो भव युधां वर । अत्र पूर्वेक्तानां हि पौरुषाणां निदर्शनं ॥ ३ विज० श्लोकद्वयमधिकं । ४ वीर० रुदन्मृतः । ५ विज० मौढ्यायस्य तवाहं वै श्रद्दधे ।

यस्य[1] शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः[2] ॥४१॥
धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ।
दैवोपसृष्टं[3] यो मौढ्यादानिनीषति दुर्मतिः ॥४२॥
एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ।
ययौ संयमनीमाशु यत्राऽऽस्ते भगवान्यमः ॥४३
विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम् ।
आग्नेयीं नैरृतीं सौम्यां वायव्यां वारुणीमथ ।
रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥४४
ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ।
अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥४५
दर्शये द्विजसूनूंस्ते माऽवज्ञाऽऽत्मानमात्मना[4] ।
ये ते नः[5] कीर्तिं विमलां मनुष्याः[6] स्थापयिष्यन्ति
इति संभाष्य भगवानर्जुनेन[7] सहेश्वरः ।
दिव्यं[8] स्वरथमास्थाय प्रतीचीं दिशमाविशत् ४७
सप्तद्वीपान्सप्तसिन्धून्सप्तसप्त गिरीनथ ।
लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥४८॥
तत्राश्वाः शैब्यसुग्रीवमेघपुष्पवलाहकाः ।
तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४९ ॥
तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ।
सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत्पुरः ॥५०॥
तमः सुघोरं गहनं[9] कृतं मह-
द्विदारयद्भूरितरेण रोचिषा ।
मनोजवं निर्विविशे सुदर्शनं
गुणच्युतो रामशरो यथा चमूः[10] ॥ ५१ ॥
द्वारेण चक्रानुपथेन तत्तमः[11]
परं परंज्योतिरनन्तपारम् ।
समश्नुवानं प्रसमीक्ष्य फाल्गुनः
प्रताडिताक्षोऽपिदधेऽक्षिणी[12] उभे ॥ ५२ ॥

ततः प्रविष्टः सलिलं नभस्वता
बलीयसैजद्बृहदूर्मिभूषणम् ।
तत्राद्भुतं वै भवनं द्युमत्तमं
भ्राजन्मणिस्तंभसहस्रशोभितम् ॥ ५३ ॥
तस्मिन्महाभीममनन्तमद्भुतं
सहस्रमूर्धन्यफणामणिद्युभिः[1] ।
विभ्राजमानं द्विगुणोल्बणेक्षणं
सिताचलाभं[2] शितिकण्ठजिह्वम् ॥ ५४ ॥
ददर्श तद्भोगसुखासनं विभुं
महानुभावं पुरुषोत्तमोत्तमम् ।
सान्द्रांबुदाभं सुपिशङ्गवाससं
प्रसन्नवक्त्रं रुचिरायतेक्षणम्[3] ॥ ५५ ॥
महामणिव्रातकिरीटकुण्डल-
प्रभापरिक्षिप्त[4]सहस्रकुन्तलम् ।
प्रलंबचार्वष्टभुजं सकौस्तुभं[5]
श्रीवत्सलक्ष्मं वनमालया वृतम् ॥ ५६ ॥
सुनन्दनन्दप्रमुखैः स्वपार्षदै[6]-
श्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।
पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभि-
र्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५७ ॥
ववन्द आत्मानमनन्तमच्युतो
जिष्णुश्च तद्दर्शनजातसाध्वसः ।
तावाह[7] भूमा परमेष्ठिनां प्रभु-
र्बद्धाञ्जली[8] सस्मितमूर्जया गिरा ॥ ५८ ॥
द्विजात्मजा मे युवयोर्दिदृक्षुणा
मयोपनीता भुवि धर्मगुप्तये ।
कलाऽवतीर्णाववनेर्भरासुरा[9]-
न्हत्वेह भूयस्त्वरयेतमन्ति[10] मे ॥ ५९ ॥
पूर्णकामावपि युवां नरनारायणावृषी ।
धर्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहम् ॥६०॥

---

१ वीर० यं न शेकुः । २ विज० स्तदधिकेश्वरः । ३ वीर० दैवोपसादितं मौढ्या । विज० दैवोपसृष्टयोर्मौढ्या । ४ विज० मावध्यात्मानमात्मना । वीर० मावज्ञामात्मनः कृथाः । ५ उभ० एतेन कीर्तिं विमलां । ६ वीर० मनुष्याः स्थापयन्ति ते । विज० मानुष्यं स्थापयिष्यसि । ७ वीर० नर्जुनेन महेश्वरः । विज० नर्जुनं स महेश्वरः । ८ विज० सहैव रथ । ९ विज० गगनच्छदं मह । १० वीर० चमूं । ११ विज० तत्तमः परं पदं । विज० यदुत्तमं परात्परं । १२ विज० प्रदीपिताक्षो ।

१ विज० द्युति । २ विज० सितांवराभं शितिकण्ठजिह्वगं । ३ विज० रुचिरस्मितेक्षणं । ४ विज० प्रभापरिष्वक्त । ५ वीर० सुकौस्तुभं । ६ उभ० श्चपार्षदैः । ७ विज० स चाह । ८ विज० बद्धाञ्जली । ९ विज० वतीर्णोस्यवने । १० विज० त्वरयैहि मेन्तिकं ।

इत्यादिष्टो भगवता तौ कृष्णौ परमेष्ठिना ।
ओमित्या[1]नम्य भूमानमादाय द्विजदारकान् ६१
न्यवर्तेतां स्वकं धाम संप्रहृष्टौ यथागतम् ।
विप्राय ददतुः पुत्रान्यथा[2]रूपं यथावयः ॥ ६२ ॥
निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ।
यत्किञ्चित्पौरुषं पुंसां मेने कृष्णानुकंपितम् ६३
[तथा[3] प्रविश्य गोविन्दो यज्ञवाटं पुनः स्वयम् ।
पूर्णं पुरोहितैर्विप्रैर्ऋत्विग्भिः क्षत्रियर्षभैः ॥ १ ॥
प्रायश्चित्तं तु चलने दीक्षायां य उदाहृतः ।
तं चकार यथान्यायं ब्राह्मणैरनुमोदितः ॥ २ ॥
समाप्य यज्ञं विधिवत्तर्पयित्वाऽर्थिनो द्विजान् ।
ऋत्विग्भिः पूजयित्वाऽन्यान्नृपांश्च कुरुसत्तम ॥३॥
यमुनायां महानद्यां कृत्वाऽवभृथमज्जनम् ।
विजहार यथाकामं महर्षिभिर्यदूत्तमः ॥ ४ ॥]
इतीदृ[1]शान्यनेकानि वीर्याणीह प्रदर्शयन् ।
बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः॥६४॥
प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ।
यथाकालं यथैवेन्द्रो भगवाञ्छ्रैष्ठ्यमास्थितः॥६५॥
हत्वा नृपानधर्मिष्ठान्घातयित्वाऽर्जुनादिभिः ।
अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः ॥६६॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥ 100

## नवतितमोऽध्यायः ॥ ९० ॥ 103

श्रीकृष्णलीलासङ्ग्रहः ॥ १ ॥

**श्रीशुक उवाच—**
सुखं स्वपुर्यां निर्व[4]सन्द्वारकायां श्रियः पतिः ।
सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥
स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ।
कन्दुको[5]दिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥२
नित्यं संकुलमार्गायां मदच्युद्भिर्मतङ्गजैः ।
स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥
उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ।
निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥
रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ।
तावद्विचित्ररूपोऽसौ तद्गेहेषु महर्द्धिषु ॥ ५ ॥
प्रोत्फुल्लोत्पलकह्लारकुमुदांभोजरेणुभिः ।
वासितामलतोयेषु कूजद्द्वि[7]जकुलेषु च ॥ ६ ॥
विजहार विगाह्यंभो ह्रदिनीषु महोदयः ।
कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च[3] योषिताम् ॥ ७ ॥
उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् ।
वादयद्भिर्मुदा वीणां सूतमागधवन्दिभिः ॥ ८ ॥
सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स रेचकैः ।
प्रतिसिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥
ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः
सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तं स्म रेचकजिहीरषयोपगुह्य
जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥
कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्-
क्रीडाऽभिषङ्गधुतकुन्तलबृन्दबन्धः ।
सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो
रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥

---

१ विज० त्यानन्दभूमान । २ विज० यथारूपांस्तदा प्रभू । विज० यथारूपं प्रसूयतां । ३ विज० चत्वारः श्लोका अधिकाः । ४ विज० न्यवसद्वारकायां । ५ विज० कन्दुकैर्हर्म्यसौधेषु । ६ विज० तावन्ति बिभ्रद्रूपाणि । ७ विज० कुलादिभिः ।

१ विज० एतदादिश्लोकत्रयं नास्ति । २ विज० शततमोध्यायः ॥ १०० ॥ ३ विज० स्वयोषितां । ४ उभ० वीणाः । ५ उभ० सेव्यमानो । ६ विज० मुखरः शक्तिभिः स्वयं । ७ वीर० कान्तं स्वसेचनजिहीर्षुतयोप । विज० कान्तस्य चेतनजिहीर्षुतयोप । ८ विज० क्रीडाभिसङ्गतसकुन्तलकुन्दगन्धः ।

नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ।
क्रीडालङ्कारवासांसि कृष्णेऽदात्तस्य च स्त्रियः १२
कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ।
नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः १३
ऊचुर्मुकुन्दैकधियोऽगिर उन्मत्तवज्जडम् ।
चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु १४

**महिष्य ऊचुः—**

कुररि विलपसि त्वं वीतनिद्रा न शेषे
स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः[2] ।
वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता
नलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥
नेत्रे निमीलयसि नक्तमदृष्टबन्धु-
स्त्वं रोरवीषि करुणं बत चक्रवाकि ।
दास्यं गता वयमिवाच्युतपादजुष्टां
किंवा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६ ॥
भोभोः सदा निष्टनसे उदन्व-
न्नलब्धनिद्रोऽधिगतप्रजागरः ।
किंवा मुकुन्दापहृतात्मलाञ्छनः
प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥ १७ ॥
त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो
क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ।
कच्चिन्मुकुन्दगदितानि यथा वयं त्वं
विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ १८॥
किं त्वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ।
गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम्॥१९॥
[मुग्धे[3] ध्यायसि किं गृहाण पुरतः कुन्दं
विकासोन्मुखं किं कुन्देन ममामुना
सुमनसः कीदृग्विधास्त्वत्प्रियाः ।
पुन्नागं मृगये सखि श्रुतिशिरो-
भूषाविशेषायितं गावोप्युज्झितसू-
नमासत तदामोदप्रकर्षोन्मुखाः ॥ १ ॥]

मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं
श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः
अत्युत्कण्ठः[1] शबलहृदयोऽस्मद्विधो बाष्पधाराः
स्मृत्वास्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः २०
प्रियरावपदानि भाषसे
मृतसंजीविकयाऽनया गिरा ।
करवाणि किमद्य ते प्रियं
वद मे वल्गितकण्ठ कोकिल ॥ २१ ॥
[शुक[2]राज गाय यदुदेवसत्कथां
कुर्मस्तवाङ्ग पयसोपसेचनम् ।
विरहाग्नितप्तहृदयेष्वलं रमा-
रमणाभिधानसुधया च सिञ्च नः ॥ १ ॥]
न चलसि न वदस्युदारबुद्धे
क्षितिधर चिन्तयसे महान्तमर्थम् ।
अपि बत वसुदेवनन्दनाङ्घ्रिं
वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥
शुष्यद्ध्रदाः करशि[3]ता बत सिंधुपत्न्यः
संप्रत्यपास्तकमलश्रिय इष्ट भर्तुः
यद्वद्वयं मधु[4]पतेः प्रणयावलोक-
मप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥ २३ ॥
हंस स्वागतमास्यतां पिब पयो ब्रूह्यंग शौरेः कथां
दूतं त्वांनुविदामकच्चिदजितः स्वस्त्यास्तउक्तं पुरा।
किंवा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं
क्षौद्रालापयकामदंश्रियमृतेसैवैकनिष्ठास्त्रियाम् २४
इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ।
क्रियमाणेन माधव्यो लेभिरे परमां गतिम्॥२५॥
श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याऽऽकर्षते मनः ।
उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः॥२६॥
याः[5] संपर्यचरन्प्रेम्णा पादसंवा[7]हनादिभिः ।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः॥[8]२७॥

१ विज० एतं श्लोकमारभ्य सप्तविंशश्लोकपर्यन्ताः १६ श्लोका न सन्ति । २ वीर० ग्रस्तबोधः । ३ वीर० अयं श्लोकोऽधिकः ।

१ वीर० अत्युत्कण्ठं सजलहृदयो । २ वीर० अयं श्लोकोऽधिकः । ३ वीर० कृशतरा । ४ वीर० यदुपतेः । ५ वीर० वैष्णवीं । ६ वीर० यास्तं । ७ वीर० संघट्टनादिभिः । ८ विज० एकादशश्लोकादनन्तरं एतत्पर्यन्तं विद्यमानाः १६ श्लोका न सन्ति ।

[गृहेषु तासामनिवार्य ईश्वरो
निरस्तसाम्यातिशयो व्यवस्थितः ।
रेमे रमाभिर्निजसौख्यसंप्लुतो
यथेतरो गार्हकमेधिकांश्चरन् ॥ १ ॥
इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
ब्रह्मादयोऽपि पदवीं न विदुर्यदीयाम् ।
भेजुर्मुदाऽविरतमेधितयाऽनुराग-
हासावलोकनवसङ्गमलज्जयैव ॥ २ ॥]
एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ।
गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥ २८ ॥
[एवं शासति भूचक्रं चक्रपाणौ जनार्दने ।
द्वारका वृष्णिनिलया योजनद्वादशायता ॥ १ ॥
मुनिभिर्ब्राह्मणैश्चैव क्षत्रियैश्चापि वन्दिभिः ।
आसीत्पूर्णा कुरुश्रेष्ठ सततं समलङ्कृता ॥ २ ॥
पिण्डारकात्कुरुक्षेत्राच्छालग्रामाच्च पुष्करात् ।
वाराणस्याः प्रयागाच्च वेङ्कटाच्छ्रीगिरेरपि ॥ ३ ॥
स्यानन्दूराच्च गोकर्णाच्चन्द्रतीर्थाच्च शोभनात् ।
सह्याद्रेश्च भृगुक्षेत्रात्कुमारनिलयादपि ॥ ४ ॥
गोदावरीतटात्पुण्यान्नर्मदानिकटादपि ।
शूर्पाकारात्प्रभासाच्च पुण्याद्बदरिकाश्रमात् ॥ ५ ॥
पावनान्नैमिशारण्याद्ब्रह्मदुर्गाच्च दुर्गमात् ।
आययुर्मुनयः शान्ता नित्यव्रतपरायणाः ॥ ६ ॥
अब्भक्षा वायुभक्षाश्च निराहारा दृढव्रताः ।
वल्कलाजिनसंवीता जटिनश्चापि मुण्डिनः ॥ ७ ॥
त्रिकालस्नायिनश्चैव मौनव्रतपरायणाः ।
वेदस्वाध्यायनिरताः स्तुतिस्तोत्रपरायणाः ॥ ८ ॥
ध्यानैकतानमनसः समाधौ कृतनिश्चयाः ।
त्वगस्थिमात्रावयवाः शिराधमनिसन्तताः ॥ ९ ॥
आगत्य मुनयो राजन्सर्वतः शान्तचेतसः ।
उपासत महाराज नित्यं तत्त्वैकचिन्तकाः ॥ १० ॥
क्षत्रियैश्च महावीर्यैर्ब्राह्मणैश्च तपोधनैः ।
सूतैश्च मागधैश्चैव लोकस्तुतिपरायणैः ॥ ११ ॥
पूर्णा मङ्गलघोषैश्च वादित्राणां च निःस्वनैः ।
निघुष्टा ब्रह्मघोषैश्च द्वारका कुरुनन्दन ॥ १२ ॥
क्षेत्राणामपि सर्वेषां तीर्थानां चाघहारिणाम् ।
देवदेवस्य सांनिध्यादग्रण्या च बभूव सा ॥ १३ ॥]
आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ।
आसन्षोडशसाहस्रं महिष्यश्च शताधिकम् ॥ २९ ॥
तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ।
रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥ ३० ॥
एकैकस्यां दशदश कृष्णोऽजीजनदात्मजान् ।
यावन्त्य आत्मनो भार्या अमोघगतिरीश्वरः ३१
तेषामुद्दामवीर्याणामष्टादश महारथाः ।
आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३२ ॥
प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेव च ।
सांबो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥ ३३ ॥
पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः ।
चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥ ३४ ॥
[त्रिवक्राया विशोकश्च पुत्रः कृष्णमनुव्रतः ।
आसीच्छिष्यो नारदस्य ददौ चित्तमखण्डितम् १
येनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मूर्तिमान्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः २]
एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३५ ॥
स रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ३६
स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥ ३७ ॥
प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चाऽऽत्मजः ।
सुबाहोः शान्तसेनोऽभूच्छतसेनस्तु तत्सुतः ॥ ३८ ॥

१ विज० श्लोकद्वयमधिकं । अत्र ध्यधिकशततमाध्यायविच्छेदश्च दृश्यते । २ विज० त्र्यधिकशततमोयमध्यायः ॥ १०३ ॥ ३ विज० एते त्रयोदश श्लोका अधिकाः ।

१ विज० गृहमेधिनः । २ वीर० साहस्रा महिष्योष्टशता । विज० साहस्रमहिष्यस्तु शता । ३ वीर० रूपाणां । ४ वीर० राजन्सहपुत्राश्च सर्वशः । ५ विज० श्चारुदेष्णश्च । ६ विज० चक्रदेवः । ७ विज० चित्रभानुर्वरूथश्च । ८ उभ० श्लोकद्वयमधिकं । ९ वीर० उपक्रोशः । १० वीर० शिष्यः साक्षान्नारदस्य दधौ । ११ वीर० मुक्तिमान्भवेत् । १२ विज० तस्यां ततो । १३ वीर० धर्मसेनोऽभू । विज० उग्रसेनोऽभू । १४ वीर० श्रुतसेनस्तु ।

न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः।
अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे॥३९॥
यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम्।
सङ्ख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप॥ ४०॥
तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च।
आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम् ४१
सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम्।
यत्रायुतानामयुतलक्षेणाऽऽस्ते स आहुकः॥४२॥
देवासुराहवहता दैतेया ये सुदारुणाः।
ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे॥४३॥
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले।
अवतीर्णाः कुलशतं तेषामेकाधिकं नृप॥ ४४॥
तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः।
ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः॥ ४५॥
शय्यासनाटनालापक्रीडास्नानादिकर्मसु।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः॥४६
[ईजे क्रतुभिरात्मानं सर्ववेदार्थसङ्ग्रहम्।
स्वयोगमायारचितैः कुरुक्षेत्रे द्विषट्समाः॥ १॥
कृष्णगाध्यसितावन्तिरामाचार्योद्धवेश्वरः।
दीक्षितोऽग्र्यपत्नीभिः पुण्यश्लोकः सहाग्रणीः २]
तीर्थं चक्रे नृपोनं यदजनि यदुषु
स्वःसरित्पादशौचं विद्विट्स्निग्धाः
स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः
यन्नामामङ्गलघ्नं श्रुतमथ गदितं
यत्कृतो गोत्रधर्मः कृष्णस्यैतन्न
चित्रं क्षितिभरहरणं कालचक्रायुधस्य॥ ४७
जयति जननिवासो देवकीजन्मवादो
यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम्।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन्कामदेवम्॥ ४८॥
[यो ह्यात्मा जगदादिमध्यनिधनो
योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनः संहिताम्
यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् १
इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्त-
लीलातनोस्तदनुरूपविडंबनानि।
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन्॥ ४९॥
मर्त्यस्तयाऽनुसवमेधितया मुकुन्द
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति।
तद्धाम दुस्तरकृतान्तजवापवर्गं
ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः॥ ५०।
[सूत उवाच—
य इदमनुशृणोति श्रावयेद्वा मुरारे-
श्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः।
जगदघभिदलं तद्भक्तकर्णावतंसं
भगवति कृतचित्तो याति तत्क्षेममधाम॥ १।

इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां दशमस्कन्धे उत्तरार्धे नवतितमोऽध्यायः॥ समाप्तोऽयं दशमस्कन्धः॥ १०॥

श्रीमद्धनुमद्भीमध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवार्पणमस्तु।

१ वीर० मयुतलक्षपुत्रः स। विज० मयुतं रक्षन्नास्ते स। २ उभ० शतमेषा। ३ वीर० स्वान्तरात्मानं। ४ विज० कं। ५ विज० नृणां यो ६ विज० षड्विश्वासं स्वरूपं पर उरसि रमा सर्वदा यस्य चास्ते। ७ विज० यच्छास्त्रं च प्रमाणं यदनु च सदसद्व्यक्तयो यत्र धर्माः।

१ वीर० यदुवरपरिषद्भिर्दोर्भिः। विज० नियमकृतपदा दस्युपीडां स्वदोर्भिः। २ विज० मुदमुभयदर्शीनां श्रीनिके तमूर्त्या स्मरवपुरबलानां स्निग्धहासेक्षया च। ३ विज० श्लोकोऽधिकः। ४ विज० गायेदमुष्य। ५ विज० दुस्तरकृत जनतापवर्गं। ६ विज० त्र्यधिकशततमोऽध्यायः॥ १०३॥

॥ श्रीः ॥

श्रीगोपालकृष्णाय नमः ।

# श्रीमद्भागवतम्

## एकादशस्कन्धः ११

### प्रथमोऽध्यायः ॥ १ ॥

यदुकुलसंक्षयं वक्तुं ऋषिदत्तयदुकुमारशापकथनं ॥ १ ॥ संक्षेपतो यदुकुलक्षयवर्णनं ॥ २ ॥

ीबादरायणिरुवाच—

ृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ।
ुवोऽवतारयद्भारं जविष्ठं जनयन्कलिम् ॥ १ ॥

' कोपिताः सुबहु पाण्डुसुताः सपत्नै-
र्द्यूतहेलनकचग्रहणादिभिस्तान् ।
ृत्वा निमित्तमितरेतरतः समेता-
हत्वा नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥

ूभारराजपृतना यदुभिर्निरस्य
ुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ।
ान्येऽवनेर्ननु गतोऽप्यगतं हि भारं
ाद्यादवं कुलमहो अविषह्यमास्ते ॥ ३ ॥

ैवान्यतः परिभवोऽस्य भवेत्कथंचि-
मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ।
ान्तः कलिं यदुकुलस्य विधाय वेणु-
तंबस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥

ृवं व्यवसितो राजन्सत्यसंकल्प ईश्वरः ।
ाापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥५॥

ृस्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ।
गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ६

आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ
तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः ॥७॥

राजोवाच—

ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ।
विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥८॥

ान्निमित्तः स वै शापो यादृशो द्विजसत्तम ।
कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ॥ ९

श्रीशुक उवाच—

बिभ्रद्वपुः सकलसुन्दरसंनिवेशं
कर्माऽऽचरन्भुवि सुमङ्गलमाप्तकामः ।
आस्थाय धाम रममाण उदारकीर्तिः
संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥

कर्माणि पुण्यनिवहानि सुमङ्गलानि
गायज्जगत्कलिमलापहराणि कृत्वा ।
कालात्मना निवसता यदुदेवगेहे
पिण्डारकं समगमन्मुनयो निसृष्टाः ॥ ११ ॥

---

१ विज० ऽवतारयन्भारं । २ विज० परान्निर । ३ वीर० ऽयगतो हि भारो । विज० प्यगतोपि भारो । ४ विज० वेणुसङ्गस्य ।

१ विज० स्तां स्मरतां । २ विज० स्तामीक्षतां । ३ वीर० सुश्लोक्यां । ४ विज० वितन्वन्नञ्जसा । ५ विज० यन्निमित्तो यदोः शापो ।

विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ।
कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥१२॥
क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ।
उपसंगृह्य पप्रच्छुरविनीता विनीतवत् ॥ १३ ॥
ते वेषयित्वा स्त्रीवेषैः सांबं जांबवतीसुतम् ।
एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा १४
प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः ।
प्रसोष्यन्ती पुत्रकामा किंस्वित्संजनयिष्यति १५
एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ।
जनयिष्यति वो मन्दा मुसलं कुलनाशनम् १६
तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम् ।
सांबस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयम् ॥१७॥
किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः ।
इति विह्वलिता गेहानादाय मुसलं ययुः ॥१८॥
तच्चोपनीय सदसि परिम्लानमुखश्रियः ।
राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥ १९ ॥
श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ।
विस्मिता भयसन्त्रस्ता बभूवुर्द्वारकौकसः ॥ २० ॥
तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ।
समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥२१॥
कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ।
उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः ॥२२
मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ।
तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥२३
भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ।
नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

नारदेन वसुदेवाय निमिजायन्तेयसंवादरूपभागवतधर्मकथनं ॥ १ ॥ तेषु कविहरिभ्यां निमिराजाय धर्मोपदेशः ॥२॥

**शुक उवाच—**
गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ।
अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः १
को नु राजन्निन्द्रियवान्मुकुन्दचरणांबुजम् ।
न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ २ ॥
तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ।
अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥
**वसुदेव उवाच —**
भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।
कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥४॥
भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥५
भजन्ति ये यथा देवान्देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥६॥
ब्रह्मंस्तथाऽपि पृच्छामो धर्मान्भागवतांस्तव ।
याञ्छ्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतो भयात्॥७
अहं किल पुराऽनन्तं प्रजाऽर्थो भुवि मुक्तिदम् ।
अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥
यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ।
मुच्येम ह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥
**श्रीशुक उवाच—**
राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ।
प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥१०॥

१ विज० युष्मान्प्रब्रूता । २ विज० सहसा । ३ विज० द्वारकायां । ४ वीर० को वा राज । ५ वीर० सर्वतोऽमृत्युमुपास्य । ६ विज० मभिवन्द्येद । ७ विज० वर्त्मनः ।

१ उभ० तं चोप । २ वीर० उद्विग्ना द्वार । ३ विज० तं चूर्णयित्वा । ४ वीर० स्वशल्ये लुब्धको । विज० शल्येषु लुब्धको । ५ उभ० प्रजार्थे । ६ विज० द्भवेऽस्मिन्विश्व ।

वेदेन नामरूपाणि विषमाणि समेष्वपि ।
धातुषूद्धव[1] कल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥
देशकालादिभावानां वस्तूनां[2] मम सत्तम ।
गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥७॥
अकृष्णसारो[3] देशानामब्रह्मण्योऽशुचिर्भवेत् ।
कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम्[4] ॥ ८ ॥
कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा ।
यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ॥९॥
द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ।
संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथ वा॥१०॥
शक्त्याऽशक्त्याऽथवा बुद्ध्या[5] समृद्ध्या च यदा[6]ऽऽत्मने
अघं कुर्वन्ति[7] हि यथा देशावस्थानुसारतः॥११॥
धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ।
कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥१२
अमेध्यलिप्तं यद्येन गन्धं लेपं व्यपोहति ।
भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते[8] ॥१३॥
स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः ।
मत्स्मृत्या[9] चाऽऽत्मनः शौचं शुद्धः कर्माचरेद्द्विजः॥
मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।
धर्मः संपद्यते[10] षड्भिरधर्मस्तु विपर्ययः[11] ॥ १५ ॥
क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ।
गुणदोषार्थनियमस्तद्भिदामेव[12] बाधते ॥ १६ ॥
समानकर्माचरणं[13] पतितानां न पातकम् ।
औत्पत्तिको गुणैः[14] सङ्गो न शयानः पतत्यधः१७
यतोयतो निवर्तेत विमुच्येत ततस्ततः ।
एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥१८॥
विषयेषु गुणाध्यासात्पुंसः[15] सङ्गस्ततो भवेत् ।

१ विज० धातुशुद्ध्यैप्र । २ विज० वचनान्मन । ३ विज० कृष्णसारोथ देशानां ब्राह्मणानां शुचिर्भवेत् । ४ विज० कीकटासंस्कृतेरिणः । ५ विज० च वा बुद्ध्या । ६ वीर० यायथाऽत्मनः । विज० तथात्मनः । ७ वीर० अलंकुर्वन्ति हि । विज० अन्ये शुध्यन्ति हि । ८ विज० तच्छौचमुपदिश्यते । ९ विज० मदभ्यासान्मनःशौचं कृत्वा । १० संपाद्यते सद्भिः । ११ उभ० विपर्ययैः । १२ विज० तद्विदामेव । १३ विज० परेण । १४ उभ० गुणैः । १५ उभ० गुणध्यानात्पुंसः ।

सङ्गात्तत्र[1] भवेत्कामः कामादेव कलिर्नृणाम्॥१९॥
कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम्[3] ॥२०॥
तया विरहितः[4] साधो जन्तुः शून्याय कल्पते ।
ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च॥२१॥
विषयाभिनिवेशेन नाऽऽत्मानं वेद नापरम् ।
वृक्षजीविकया जीवन्व्यर्थं भस्त्रेव[5] यः श्वसन्॥२२॥
फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।
श्रेयोविवक्षया[6] प्रोक्तं यथा भैषज्यरोचनम् ॥२३॥
उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।
आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥२४॥
न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।
कथं युञ्ज्यात्पुनस्तेषु तांस्तमो विशतो बुधः ॥२५
एवं[7] व्यवसितं केचिदविज्ञाय कुबुद्धयः ।
फलश्रुतिं कुसुमितां[8] न वेदज्ञा वदन्ति हि ॥२६॥
कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।
अग्निमुग्धा धूमतान्ताः स्वं[9] लोकं न विदन्ति ते ॥
न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ।
उक्थशस्त्रा[10] ह्यसुतृपो यथा नीहारचक्षुषः ॥२८॥
ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ।
[वृथा[11] पशून्विनिघ्नन्ति हिंसन्ते प्रेत्य तैस्तु ते ।]
हिंसायां यदि रागः[12] स्याद्यज्ञ एव न चोदना २९
हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया
यजन्ते देवता यज्ञैः पितृभूतपतीन्खलाः ॥३०॥
स्वप्नोपममसुं लोकमसन्तं श्रवणप्रियम् ।
आशिषो हृदि संकल्प्य त्यजन्त्यर्थान्यथा वणिक्॥
रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ।
उपासते इन्द्रमुख्यान्देवादीन्न[13] तथैव माम्॥३२॥
इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।

१ विज० सङ्गादेव । २ उभ० दनु । ३ विज० व्यापिनी ततः । ४ उभ० तया च रहितः । ५ विज० ग्रस्तवयाः । ६ विज० श्रोतुर्विवक्षया । ७ वीर० इदमर्धं नास्ति । ८ विज० कुसुमितामवेदज्ञा । ९ विज० स्वलोकं । १० उभ० उक्थशासो ह्यसु । ११ उभ० इदमर्धमधिकं । १२ विज० कामः । १३ विज० देवादीन्न यथैव ।

तस्मान्त इह भूयास महाशाला महाकुलाः ॥३३॥
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ।
मानिनां चातिस्तब्धानां मद्वार्ताऽपि न रोचते३४
वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया[1] इमे ।
परोक्षवादा[2] ऋषयः परोक्षं मम च प्रियम् ॥३५॥
शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गंभीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥
मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ।
भूतेषु घोषरूपेण विसेषूर्णेव लक्ष्यते ॥ ३७ ॥
यथोर्णनाभिर्हृदयादूर्णामुद्वमते[3] मुखात् ।
आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥३८
छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ओङ्कारा[1]द्व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम् ॥३९
विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥४०॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च
त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥४१
किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥४२॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते[2] ह्यहम् ।
एतावान्सर्ववेदार्थः शब्द आस्थाय मां[3] भिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति[4] ॥४३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

तत्वसङ्ख्यानप्रभेदानामविरोधकल्पनं ॥ १ ॥ प्रकृतिपुरुषविवेकः ॥ २ ॥ जन्ममृत्युप्रकारकथनं ॥ ३ ॥

**उद्धव उवाच—**
कति[4] तत्त्वानि विश्वेश सङ्ख्यातान्यृषिभिः प्रभो ।
नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥
केचित्षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ।
सप्तैके नव षट्र केचिच्चत्वार्येकादशापरे ॥ २ ॥
केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ।
एतावत्त्वं हि सङ्ख्यानामृषयो यद्विवक्षया ।
गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥
**श्रीभगवानुवाच—**
युक्तं च[5] सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।
मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥४॥
नैतदेवं यथाऽऽत्थ त्वं यदहं वच्मि तत्तथा ।
एवं विवदतां[6] हेतुं शक्तयो मे दुरत्ययाः ॥ ५ ॥
यासां व्यतिकरादासीद्विकल्पो वदतां पदम् ।
प्राप्ते शमदमेऽप्येति[5] वादस्तमनुशाम्यति ॥ ६ ॥
परस्परानुप्रवशात्तत्त्वानां पुरुषर्षभ ।
पौर्वापर्यप्रसङ्ख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥
एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ।
पूर्वस्मिन्वा परस्मिन्वा तत्त्वे तत्त्वानि सर्वशः ॥८॥
पौर्वापर्यमतोऽमीषां प्रसङ्ख्यानमभीप्सताम् ।
यथा[6] विविक्तं यद्वक्त्रं[7] गृह्णीमो युक्तिसंभवात् ॥९॥
अनाद्यविद्यायुक्तस्य पुरुषस्याऽऽत्मवेदनम् ।
स्वतो न[8] संभवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥१०॥
पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।
तदन्यकल्पनापार्था ज्ञानं च प्रकृतेर्गुणः ॥११॥

१ उभ० विषया अपि । २ विज० वादो वेदोयं । ३ विज० मुद्वहते । ४ विज० कानि । ५ उभ० युक्तयः सन्ति । ६ वीर० एवंविधकथाहेतुः । विज० एवं विवदतां हेतुः ।

१ विज० ओङ्कारेष्वञ्जितां । २ विज० विकल्प्यपोह्य इत्यहं । ३ विज० माऽभिदां । ४ उभ० प्रशाम्यति । ५ विज० व्येति । ६ वीर० यथाविवक्षं । ७ विज० यद्युक्तं । ८ विज० स्वतो न स भवेद्यस्मात्ततोऽन्यः पुरुषो भवेत् । वीर० न संभवेदन्यः ।

प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः ।
सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥१२॥
सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोऽच्यते ।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च॥१३॥
पुरुषप्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव१४
श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।
वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः १५
शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः॥१६॥
सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ।
सत्त्वादिभिर्गुणैर्धत्ते पुरुषो व्यक्तं ईक्षते ॥ १७॥
व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ।
लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् १८
सप्तैव धातव इति तत्रार्थाः पञ्च खादयः ।
ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥१९॥
षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ।
तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत् ॥२०॥
चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ।
जातानि तैरिदं जातं जन्माऽवयविनः खलु २१
[एकादशत्व आत्माऽसौ महाभूतेन्द्रियाणि च ।]
सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ।
पञ्च पञ्चैकमनसा आत्मा सप्तदशः स्मृतः॥२२॥
तद्वत्षोडशसङ्ख्याने आत्मैव मन उच्यते ।
भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥२३॥
एकादशत्व आत्माऽसौ महाभूतेन्द्रियाणि च ।
अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥ २४ ॥
इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम् ।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् २५

उद्धव उवाच—

प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।
अन्योऽन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ।
प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि २६
एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि ।
छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ॥ २७ ॥
त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः ।
त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः॥२८॥

श्रीभगवानुवाच—

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ।
एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥२९॥
ममाङ्ग माया गुणमय्यनेकधा
विकल्पबुद्धीश्च गुणैर्विधत्ते ।
वैकारिकस्त्रिविधोऽध्यात्ममेक-
मथाधिदैवमधिभूतमन्यत् ॥ ३० ॥
दृग्रूपमार्कं वपुरत्र रन्ध्रे
परस्परं सिध्यति यः स्वतः खे ।
आत्मा यदेषामपरो य आद्यः
स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः ।
एवं त्वगादि श्रवणादि चक्षु-
र्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३१ ॥
योऽसौ गुणक्षोभकृतो विकारः
प्रधानमूलान्महतः प्रसूतः ।
अहं त्रिवृन्मोहविकल्पहेतु-
र्वैकारिकस्तामस ऐन्द्रियश्च ॥ ३२ ॥
आत्मा परिज्ञानमयो विवादो
ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां
मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥

उद्धव उवाच—

त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ।
उच्चावचान्यथा देहान् गृह्णन्ति विसृजन्ति च ३४

---

१ विज० प्रकृतेर्गुणसाम्ये तु । २ वीर० मिहेष्यते । ३ विज० व्यक्तमीक्षते । ४ वीर० तथार्थाः । विज० यत्रार्थाः । ५ वीर० इदमर्धमधिकं । ६ विज० आत्मना मन । ७ वीर० द्रियाणि प्राणश्च मन । ८ विज० इदमर्धं नास्ति । वीर० इदमर्धं २१ श्लोके गतं । ९ उभ० इदमर्धं नास्ति ।

१ विज० सर्वेश । २ वीर० तत्वनैपुणैः । ३ विज० प्रमोषस्तनु । ४ वीर० नचापरे । ५ वीर० बुद्धीः स्वगुणैः । विज० बुद्धि च । ६ विज० दृग्रूपमर्कश्च परत्र । ७ विज० न स्वतोऽसौ । ८ विज० यदेषामुपराम । वीर० यदेषामपरोऽयमाद्यः । ९ विज० सिद्ध्यसिद्धिः । १० वीर० श्रवणं च चक्षु । ११ विज० मूलो जगतः प्रसूतिः ।

तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ।
न ह्येतत्प्रायशो लोके विद्वांसः[1] सन्ति वञ्चिताः ॥

श्रीभगवानुवाच—

मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ।
लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥३६॥
ध्यायन्मनो[2]ऽनु[3]विषयान्दृष्टान्वाऽनुश्रुतानथ ।
उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ॥३७॥
विषयाभिनिवेशेन नाऽऽत्मानं यत्स्मरे[4]त्पुनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥३८॥
जन्मत्वात्मतया पुंसः सर्वभावेन भूरिद ।
विषयस्वीकृतिं प्राहुर्यथा स्वप्न[5]मनोरथः ॥ ३९ ॥
स्वप्नं मनोरथं चेत्थं[6] प्राक्तनं न स्मरत्यसौ ।
तत्र पूर्वमिवाऽऽत्मानमपूर्वं चानुपश्यति ॥४०॥
इन्द्रियाय[7]न सृष्ट्येदं त्रैविध्यं भाति वस्तुनि ।
बहिरन्तर्भिदा हेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥
नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥४२॥
यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ।
तथैव सर्वभूतानां वयोऽवस्था[8]दयः कृताः ॥४३॥
सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ।
सोऽयं पुमानिति नृणां गीर्धी[9]र्मृषाऽऽयुषाम् ॥४४॥
मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ।
म्रियते वाऽमरो भ्रान्त्या यथाग्निर्दारुसंयुतः ॥४५
निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ।
वयो मध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥४६॥
एता मनोरथमयीर्ह्यन्यस्यो[10]च्चावचास्तनूः ।
गुणसङ्गादुपादत्ते क्वचित्कश्चिज्जहाति च ॥४७॥
आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।
न[1] भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥ ४८ ॥
तरोर्बीजविपाका[2]भ्यां यो विद्वान्जन्मसंयमौ ।
तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥४९॥
प्रकृतेरेवमात्मानमविविच्याबुद्धः पुमान् ।
तत्त्वेन स्पर्शसंमूढः संसारं प्रतिपद्यते ॥ ५० ॥
सत्त्वसंगादृषीन्देवान्रजसा सुरमानुषान् ।
तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ५१
नृत्यतो गायतः पश्य[3]न्यथैवानुकरोति तान् ।
एवं बुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते ॥५२॥
यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥५३॥
यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्न[4]दृष्टाश्च दाशार्ह तथा संसार आत्मनः॥५४॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषया[5]नस्य स्वप्नेऽनर्थागमो यथा॥५५॥
तस्मादुद्धव मामुङ्क्ष्व विषयानसदिन्द्रियैः ।
आत्माग्रहणनिर्भातं[6] पश्य वैकल्पिकं भ्रमम् ॥५६॥
क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धो[7]ऽसूयितोऽथवा ।
ताडितः संनिबद्धो[8] वा वृत्त्या वा परिहापितः ५७
निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकंपितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ५८

उद्धव उवाच—

यथैवमनुबुध्येयं वद नो वदतां वर ।
सुदुःसह[9]मिमं मन्य आत्मन्यसदतिक्रमम् ॥५९॥
विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी ।
ऋते[10] त्वद्धर्मनिरतान् शान्तांस्ते चरणालयान् ॥६०॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

१ विज० विद्वांसोऽञ्चन्ति । २ वीर० ध्यायमानो । ३ विज० हि विषया । ४ वीर० यन्मनः स्मरेत् । विज० यत्स्मरेन्मनः । ५ वीर० स्वप्नमनोरथौ । विज० स्वप्नो मनोरथः । ६ विज० चार्थे । ७ विज० ईदृशायासविज्ञाय त्रैविध्यं । ८ विज० ऽवस्था च तत्कृता । ९ विज० गीर्भिर्मृषायुषां । १० वीर० ह्यन्याश्चोच्चावचास्तथा ।

१ विज० भवाप्ययौ वस्तूनामभिज्ञा द्वयलक्षणौ । २ विज० बीजविकाराभ्यां । ३ वीर० पश्यंस्तथैवा । ४ उभ० स्वप्नदृष्टश्च । ५ विज० विषयान्पुंसः । स्वप्नेप्यर्थागमो । ६ विज० निष्पन्नं पश्यन्वैकल्पिकं । ७ विज० प्रलब्धः शापितोऽपि वा । ८ उभ० सन्निरुद्धो वा । ९ विज० सुदुःसहमिदं । १० वीर० स्वधर्मे ।

# त्रयोविंशोऽध्यायः ॥ २३ ॥

मनसः दुःखादिसहनोपायकथनार्थं भिक्षुगीताकथनं ॥ १ ॥

**श्रीबादरायणिरुवाच—**

स एवमाशंसित उद्धवेन
भागवतमुख्येन[1] दाशार्हमुख्यः[2]।
सभाजयन्भृत्यवचो मुकुन्द-
स्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥

**श्रीभगवानुवाच—**

बार्हस्पत्य[3] स वै नात्र साधुर्वै दुर्जनेरितैः।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥
न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः।
यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ३ ॥
कथयन्ति महत्पुण्यमितिहासमिहोद्धव।
तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥
केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः।
स्मरता धृतियुक्तेन विपाकं निजकर्मणाम्[4] ॥ ५ ॥
अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया।
वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥
ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः।
शून्यावसथ आत्माऽपि काले कामैरनर्चितः ॥ ७ ॥
दुःशीलस्य कदर्यस्य द्रुह्यन्ते[5] पुत्रबान्धवाः।
दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम् ॥ ८ ॥
तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः।
धर्मकामविहीनस्य चुक्रुधुः पञ्च भागिनः ॥ ९ ॥
तदवध्यानविस्रस्त[6]पुण्यस्कन्धस्य भूरिद।
अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥ १० ॥
ज्ञातयो जगृहुः किंचित्किंचिद्दस्यव उद्धव।
दैवतः कालतः किंचिद्ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥
स एवं द्रविणे नष्टे धर्मकामविवर्जितः।
उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥
तस्यैवं ध्यायतो दीर्घं[1] नष्टरायस्तपस्विनः।
खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥
स चाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः[2]।
न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥
प्रायेणार्थाः[3] कदर्याणां न सुखाय कदाचन।
इह चाऽऽत्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥
यशो यशस्विनां शुद्धं श्लाघ्या[4] ये गुणिनां गुणाः।
लोभः स्वल्पोऽपि तान्हन्ति श्वित्रो[5] रूपमिवेप्सितम् ॥ १६ ॥
अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥
स्तेयं हिंसाऽनृतं दंभः कामः क्रोधः स्मयो मदः।
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम्।
तस्मादनर्थमर्थाख्यं श्रेयोर्थी दूरतस्त्यजेत् ॥ १९ ॥
भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा।
एकाः[6]स्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥ २० ॥
अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः।
त्यजन्त्याशु[7] स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥
लब्ध्वा जन्मामरप्रार्थ्यं[8] मानुष्यं तद्द्विजाग्र्यताम्।
तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥
स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान्।
द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य[9] धामनि ॥ २३ ॥
देवर्षिपितृभूतानि ज्ञातीन्बन्धूंश्च[10] भागिनः।
असंविभज्य चाऽऽत्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥

---

१ वीर० तद्भक्तमुख्येन। २ उभ० दशार्हवर्यः। ३ वीर० बार्हस्पत्य न सोस्त्येव। विज० बाह्यान्तर्भञ्जनो ह्यत्र। ४ विज० कर्मणः। ५ विज० द्रुह्यतः पुत्रबान्धवान्। ६ वीर० विध्वस्त।

१ विज० दीर्घमगादायुस्तप। २ विज० स्रुतापितः। ३ विज० प्रायेणार्थैः। ४ वीर० शुभ्रश्लाघ्या। ५ वीर० श्वित्रं रूपमिवोर्जितं। ६ विज० एकयाऽर्थेच्छया सद्यः सर्वे चाप्यरयः कृताः। ७ वीर० त्यजन्त्यसून्स्पृधो। विज० त्यजन्त्यसून्नृथा। ८ विज० जन्मान्तरैः। ९ विज० सर्व। १० वीर० ज्ञातीन्बन्धून्स्वभागिनः। विज० ज्ञातीनन्यांश्च।

व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम् ।
कुशला[1] येन सिध्यन्ति जरठः किंनु साधये[2] ॥२५
कस्मात्संक्लिश्यते[3] विद्वान्व्यर्थयाऽर्थेहयाऽसकृत् ।
कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः[4] २६
किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ।
मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥२७॥
नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ।
येन नीतो दशामेतां निर्वेदश्चाऽऽत्मनः प्लवः २८
सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ।
अप्रमत्तोऽखिलस्वार्थे[5] यदि स्यात्सिद्ध आत्मनि२९
तत्र मामनुमोदेरन्देवास्त्रिभुवनेश्वराः ।
मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥

**श्रीभगवानुवाच—**

इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ।
उन्मुच्य हृदयग्रन्थीन् शान्तो भिक्षुरभून्मुनिः ३१
स चचार महीमेतां संयतात्मेन्द्रियानिलः ।
भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत्॥३२॥
तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ।
दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः ॥३३॥
केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् ।
पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ३४
प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ।
अन्नं च भैक्ष्यसंपन्नं भुञ्जानस्य सरित्तटे ॥३५॥
मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य[6] च मूर्धनि ।
यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत्३६
तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ।
बध्नन्ति रज्वा तं केचिद्बध्यतां बध्यतामिति ३७
क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः ।
क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः॥३८॥
अहो एष महासारो धृतिमान्गिरिराडिव ।
मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ॥ ३९ ॥

इत्येके विहसन्त्येनमेके दुर्वातयन्ति[1] च ।
तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥४०॥
एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ।
भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥४१॥
परिभूत इमां गाथामगायत नराधमैः
पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीं ४२

**द्विज उवाच—**

नायं जनो मे सुखदुःखहेतु-
र्न देवतात्मा ग्रहकर्मकालाः ।
मनः परं कारणमामनन्ति
संसारचक्रं परिवर्तयेद्यत् ॥ ४३ ॥
मनो गुणान्वै सृजते बलीय-
स्ततश्च कर्माणि विलक्षणानि ।
शुक्लानि कृष्णान्यथ लोहितानि
तेभ्यः सवर्णाः सृतयो[2] भवन्ति ॥ ४४ ॥
अनीह आत्मा मनसा[3] समीहता
हिरण्मयो मत्सख उद्विचष्टे ।
मनः स्वलिङ्गं परिगृह्य कामान्
जुषन्निबद्धो गुणसङ्गतोऽसौ ॥ ४५ ॥
दानं स्वधर्मो नियमो यमश्च[4]
श्रुतं च कर्माणि च सद्व्रतानि ।
सर्वे मनोनिग्रहलक्षणान्ताः
परो हि योगो मनसः समाधिः ॥ ४६ ॥
समाहितं यस्य मनः प्रशान्तं
दानादिभिः किं वद तस्य कृत्यम् ।
असंयतं यस्य मनो विनश्यद्[5]-
दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥
मनो वशेऽन्ये ह्यभवं[6] स्म देवा
मनश्च नान्यस्य वशं समेति ।
भीष्मो[7] हि देवः सहसः सहीया-
न्युञ्ज्याद्वशे[8] तं स हि देवदेवः ॥ ४८ ॥

१ विज० कुशला यं न सिध्यन्ति । २ विज० साधयेत् । ३ उभ० तस्मा । ४ वीर० संविमोहितः । ५ विज० ऽखिलार्थेषु यदि स्यां । ६ उभ० निष्ठीवन्त्यस्य ।

१ विज० दौर्वादयन्ति च । २ विज० गतयो । ३ विज० मनसः समीहितं । ४ विज० श्रुतानि कर्माणि । ५ विज० विनश्येद्दाना । ६ विज० हि भवन्ति । वीर० ह्यभवंश्च । ७ विज० भीमो हि । ८ विज० सहायान्नात्याविशतत्स हि ।

तं दुर्जयं शत्रुमसह्यवेग-
मरुन्तुदं तन्न विजित्य केचित् ।
कुर्वन्त्यसद्विग्रहमत्र मर्त्यै-
र्मित्राण्युदासीनरिपून्विमूढाः[1] ॥ ४९ ॥
देहं मनोमात्रमिमं गृहीत्वा
ममाहमित्यन्धधियो मनुष्याः ।
एषोऽहमन्योऽयमिति भ्रमेण
दुरन्तपारे तमसि भ्रमन्ति ॥ ५० ॥
जनस्तु[2] हेतुः सुखदुःखयोश्चे-
त्किमात्मनश्चात्र[3] ह भौमयोस्तत् ।
जिह्वां क्वचित्सन्दशति स्वदद्भि-
स्तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥
दुःखस्य हेतुर्यदि देवताऽस्तु
किमात्मनस्तत्र विकारयोस्तत् ।
यदङ्गमङ्गेन निहन्यते क्वचि-
त्क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥
आत्मा यदि स्यात्सुखदुःखहेतुः
किमन्यतस्तत्र निजस्वभावः ।
न ह्यात्मनोऽन्यद्यदि तन्मृषा स्या-
त्क्रुध्येत कस्मान्न[4] सुखं न दुःखम् ॥ ५३ ॥
ग्रहा निमित्तं सुखदुःखयोश्चे-
त्किमात्मनोऽजस्य जनस्य [5]ते वै ।
ग्रहैर्ग्रहस्यैव वर्द्धन्ति[6] पीडां
क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥
कर्माऽस्तु हेतुः सुखदुःखयोश्चे-
त्किमात्मनस्तद्धि जडाजडत्वे[7] ।
देहे[1]स्त्वचित्पुरुषोऽयं सुपर्णः
क्रुध्येत कस्मै न हि कर्ममूलम् ॥ ५५ ॥
कालस्तु[2] हेतुः सुखदुःखयोश्चे-
त्किमात्मनस्तत्र तदात्मको[3]ऽसौ ।
नाग्नेर्हि तापो न हिमस्य तत्स्या-
त्क्रुध्येत कस्मै न परस्य द्वन्द्वम्[4] ॥ ५६ ॥
न केनचित्क्वापि कथंचनास्य
द्वन्द्वोपरागः परतः परस्य
यथा[5]ऽहमः संसृतिरूपिणः स्या-
देवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥
एतां स[6] आस्थाय परात्मनिष्ठा-
मध्यासितां पूर्वतमैर्महर्षिभिः[7] ।
अहं तरिष्यामि दुरन्तपारं
तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥
श्रीभगवानुवाच-
निर्विद्य नष्टद्रविणो गतक्लमः
प्रव्रज्य गां पर्यटमान इत्थम् ।
निराकृतोऽसद्भिरपि स्वधर्मा-
दकर्पितो[8]ऽमुं मुनिराह गाथाम् ॥ ५९ ॥
सुखदुःखप्रदो नान्यः पुरुषस्याऽऽत्मविभ्रमः ।
मित्रोदासीनरिपवः संसार[9]स्तमसः कृतः ॥६०
तस्मात्सर्वात्मना तात निगृहाण मनो धिया
मय्यावेशितया युक्त एतावान्योगसंग्रहः ॥६१
य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः
धारयन् श्रावयन् [10]शृण्वन् द्वन्द्वैर्नैवाभिभूयते॥६२

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

१ विज० मित्रैरुदासीनरिपु । २ विज० जनोस्य । ३ उभ० श्चात्र हि । ४ उभ० कस्मै न सुखं । ५ वीर० ये वै । ६ भवन्ति पीडाः । ७ विज० जडेऽजडत्वे ।

१ विज० देहे स्वविद्पु । २ विज० कालोऽस्तु । ३ विज० तदात्मनोऽसौ । ४ विज० बोद्धुः । ५ विज० यथात्मनः । ६ उभ० समास्थाय । ७ वीर० मैनीषिभिः । ८ विज० पितासौ । ९ वीर० संसारस्तन्निबन्धनः । विज० संसारः स्वमनस्ततः । १० वीर० यस्तु ।

# चतुर्विंशोऽध्यायः ॥ २४ ॥

मनोमोहनिरासार्थं साङ्ख्यकथनं ॥ १ ॥

श्रीभगवानुवाच—
अथ ते संप्रवक्ष्यामि साङ्ख्यं पूर्वैर्विनिश्चितम्[1] ।
यद्विज्ञाय पुमान्सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥१॥
आसीज्ज्ञानमथो अर्थ[2] एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे[3] ॥ २ ॥
तन्मायाफलरूपेण[4] केवलं निर्विकल्पितम्[5] ।
वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥३॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः[6] पुरुषः सोऽभिधीयते ॥४॥
तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥ ५ ॥
तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः ।
ततो विकुर्वतो जातो योऽहंकारो विमोहनः ॥६॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः[7] ॥ ७ ॥
अर्थस्तन्मात्रिकाज्जज्ञे[8] तामसादिन्द्रियाणि च ।
तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥
मया संचोदिता भावाः सर्वे संहत्यकारिणः ।
अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥
तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ[9] ।
मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चाऽऽत्मभूः १०
सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ।
लोकान्सपालान्विश्वात्मा भूर्भुवःस्वरिति त्रिधा ११
देवानामोक आसीत्स्वर्भूतानां च भुवः पदम् ।
मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परम् १२
अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ।
त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् १३

१ उभ० पूर्वविनिश्चतं । २ विज० ह्यर्थं । ३ विज० जनाः । ४ विज० तन्मया । ५ विज० केवलेन विकल्पितं । ६ विज० भागः । ७ वीर० न्मयं । ८ विज० न्मात्रको जज्ञे । ९ वीर० संभवे । विज० संस्थिते ।

योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ।
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥१४॥
मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।
गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥
अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिध्यति ।
सर्वोऽप्युभयसंयुक्तः[1] प्रकृत्या पुरुषेण च ॥१६॥
यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् ।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥१७॥
यदुपादाय पूर्वस्तु[2] भावो विकुरुते परम् ।
आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥१८॥
प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् १९
सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ।
महान्गुणविसर्गार्थः[3] स्थित्यन्तो यावदीक्षणम् २०
विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।
पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥
अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥२२॥
अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ।
लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥२३॥
रूपं वायौ स च स्पर्शे लीयते सोऽपि चांबरे ।
अंबरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ॥२४॥
योनिर्वैकारिके सौम्य लीयते मनसीश्वरे[4] ।
शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥२५॥
स लीयते महान्स्वेषु गुणेषु गुणवत्तमः ।
तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥२६॥
कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः २७

१ विज० सर्व ह्युभयसंयुक्तं । २ वीर० यस्य यस्मिन् । विज० यतो यस्मिन् । ३ विज० विसर्गोर्थः । ४ विज० महतीश्वरे ।

एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥२८॥
एष साङ्ख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः ।
प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥२९॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

सत्त्वादिगुणवृत्तिवर्णनं ॥ १ ॥

**श्रीभगवानुवाच—**

गुणानामसमिश्राणां पुमान्येन यथा भवेत् ।
तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥
शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः२
काम ईहा मदस्तृष्णा स्तंभ आशीर्भिदा सुखम् ।
मदोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः॥३॥
क्रोधो लोभोऽनृतं हिंसा याञ्चा दंभः क्लमः कलिः ।
शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः ॥४
सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ।
वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥
सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ।
व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः॥६॥
धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ।
गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥
प्रवृत्तिलक्षणे निष्ठा पुमान्यर्हि गृहाश्रमे ।
स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥८॥
पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः ।
कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥९॥
यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।
तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा ॥१०॥
यदा आशिष आशास्य मां भजेत स्वकर्मभिः ।
तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ११
सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे ।
चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते॥१२
यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ।
तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् १
यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा बलम् ।
तदा दुःखेन युज्येत कर्मणा यशसा श्रिया॥१४॥
यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम् ।
युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया१५
यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ।
देहेऽभयं मनोसङ्गं तत्सत्त्वं विद्धि मत्पदम्॥१६॥
विकुर्वन्क्रियया चाधीरनिर्वृत्तिश्च चेतसाम् ।
गात्रास्वास्थ्यं मनोभ्रान्तं रज एतैर्निशामय॥१७॥
सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ।
मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥
एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥१९॥
सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु संततम्॥२०॥
उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ।
तमसाऽधोऽध आमुख्याद्रजसाऽन्तरचारिणः २१
सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।

१ वीर० मानसो । २ वीर० गुणानां सहमिश्राणां । विज० गुणानामप्यमिश्राणां । ३ विज० ह्रीः क्षमा निवृति-र्धृतिः । ४ विज० धार्ष्ट्यवीर्यबलोद्यमाः । ५ विज० माया दंभोऽक्षमा कलिः । ६ विज० लक्षणां निष्ठां । ७ विज० मां यजेत ।

१ वीर० भेदकः । विज० हेतिकः । २ विज० सत्वे रजः-सङ्गभिदाचलं । ३ विज० द्रजःसत्वे तमोमूढो ह्ययं जनः । ४ विज० युज्यते । ५ विज० त्रिष्वसङ्गतं । ६ वीर० रजोलयात् ।

तमोलयास्तु निरयं यान्ति मामेव निर्गुणा[illegible] २२
मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत्
राजसं फलसंकल्पं हिंसाप्रायादि तामसम्[illegible] ३॥
कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च [illegible]त् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम्[illegible] ४॥
वनं तु सात्त्विको वासो ग्रामो राजस उच्य[illegible] ।
तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥[illegible] ॥
सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः [illegible]तः।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः[illegible] ६॥
सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु रा[illegible]ती ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा २७
पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम्
राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि । ८॥
सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राज[illegible] ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् । ९॥

द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः[1] ।
श्रद्धाऽवस्था कृतिर्निष्ठा त्रैगुण्यः[2] सर्व एव हि ३०
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः[3] ।
दृष्टं श्रुतमनुध्यातं बुद्ध्या[4] वा पुरुषर्षभ ॥ ३१ ॥
एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ३२
भक्तियोगेन मन्निष्ठो मद्भावाय[5] प्रपद्यते ।
तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ॥३३॥
[6]गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ।
निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः॥३४॥
रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ।
सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः॥३५॥
संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ।
जीवो जीवविनिर्मुक्तो गुणैश्चाशयसंभवैः ।
मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे [illegible]द्वादशस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६

दुष्टसङ्गेन योगविघातः सत्सङ्गेन योगप्राप्तिरित्यत्र ऐलगीताकथनं ॥ १ ॥

**श्रीभगवानुवाच—**
मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ।
आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥१
गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।
वर्तमानोऽपि न पुमान्युज्यते वस्तुभिर्गुणैः ॥२
सङ्गं न कुर्यादसतां शिश्नोदरतृपां[2] क्वचित् ।
[3]तस्यानुगस्तमस्यन्धे पतत्यन्धानुगोऽन्धवत्[4] ॥३
ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ।
उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे[5] ॥ ४ ।
त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ।
विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥ ५॥

कामानतृप्तोनुजुषन्क्षुल्लकान्वर्षयामिनीः ।
न वेद[6] यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः ॥ ६
**ऐल उवाच—**
अहो मे मोहविस्तारः कामकश्मलचेतसः ।
देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः॥७॥
नाहं वेदाभिनिर्मुक्तः सूर्यो[8] वाऽभ्युदितोऽमुया ।
मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥
अहो मे आत्मसंमोहो येनाऽऽत्मा योषितां कृतः

1 विज० कर्मनिष्ठं तु राजसं । 2 वीर० तृषां । 3 वीर० यस्यानुग । 4 विज० त्वन्धानुगोऽन्धवत् । 5 विज० संयुतः ।

1 विज० कारणं । 2 विज० त्रैगुण्याः । 3 विज० निष्ठिताः । 4 विज० मनुध्यायेद्बुद्ध्या । 5 वीर० मद्भावायोपपद्यते । 6 विज० एतदाद्यर्धषट्कं नास्ति । 7 विज० न वेद गणनां यान्तीं । 8 विज० सूर्येणाभ्युदितो मृषा ।

यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥
कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ।
योऽन्वगच्छं[1] स्त्रियं यान्तीं खरवत्पादताडितः[2] ११
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् १२
स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥
सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।
न[3] तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥
पुंश्चल्याऽपहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोऽक्षजम् ॥ १५ ॥
बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।
मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥
किमेतया[4] नोपकृतं रज्ज्वा[5] वा सर्पचेतसः ।
द्रष्टुः[6] स्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥
क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ।
क्व गुणाः सौमनस्याद्या ह्यध्यासो[7]ऽविद्यया कृतः १८
पित्रोः किं[8] स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः
किमात्मनः किं सुहृदामिति यो नावसीयते[9] १९
तस्मिन्कलेबरेऽमेध्ये तुच्छनिष्ठे विषज्जते[10] ।
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ ।
विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥
अथाऽपि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित्[11] ।
विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा २२
अदृष्टादश्रुताद्भावान्न भाव उपजायते ।
असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः २३
तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।
विदुषां चाप्यविश्रब्धः[1] षड्वर्गः किमु मादृशाम् २४

श्रीभगवानुवाच—

एवं प्रगायन्नृप देवदेवः
स उर्वशीलोकमथो विहाय ।
आत्मानमात्मन्यवगम्य मां वै
उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥
ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।
सन्त एतस्य[2] छिन्दन्ति मनोव्यासङ्गमुक्तिभिः २६
सन्तोऽनपेक्षा मच्चिताः प्रशान्ताः समदर्शिनः ।
निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ॥ २७ ॥
तेषु नित्यं महाभाग महाभागेषु मत्कथाः ।
संभवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८
ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चाऽऽदृताः
मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९
भक्तिं लब्धवतः साधोः[4] किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥
यथोपश्रयमाणस्य भगवन्तं विभावसुम् ।
शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ ३१
निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम्[5] ।
सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ३२
अन्नं हि प्राणिनां प्राण[6] आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य सन्तो[7]ऽर्वाग्बिभ्यतोऽरणं ३३
सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः सन्त[8] आत्माऽहमेव च ३४
वैतसेनस्ततो[9]ऽप्येवमुर्वश्या लोकनिस्पृहः ।
मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

१ वीर० योनुगच्छेत्स्त्रियं । २ विज० स्मरबाणविताडितः । ३ वीर० नातृप्यदात्मभूः कामैः । विज० न तृप्त आत्मभूः कामो । ४ वीर० मेतया मेऽपकृतं । विज० किन्वेतया मएकान्ते । ५ विज० रज्ज्वां वै । ६ उभ० द्रष्टुः स्वरूपा । ७ वीर० ह्यत्रैतेऽविद्यया कृताः । ८ वीर० स किंनु । विज० किंस्विन्नु । ९ वीर० नावसीदति । १० विज० नो विषज्जेत । ११ वीर० यात्मवित् ।

१ वीर० षामप्यविश्रब्धः । २ विज० श्रभ्यः । ३ विज० एवास्य । ४ वीर० साधोः । ५ वीर० वा परायणं । विज० ते परायणं । ६ वीर० प्राणा । ७ वीर० संसाराद्बिभ्यतो विज० सन्तोऽतो बिभ्यतो । ८ विज० सन्तः पिता माताऽहं । ९ विज० चेतसेलासुतोप्येव ।

# सप्तविंशोऽध्यायः ॥ २७ ॥

क्रियायोगे अर्चाप्रभेदस्य पूजाविधानस्य च कथनं ॥ १ ॥

उद्धव उवाच—
क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ।
यस्मात्त्वां ये यथाऽर्चन्ति सात्वताः सात्वतर्षभ॥१॥
एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ।
नारदो भगवान्व्यास आचार्योऽङ्गिरसः सुतः॥२॥
निःसृतं ते मुखांभोजाद्यदाह भगवानजः ।
पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान्भवः ॥३
एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ।
श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥
एतत्कमलपत्राक्ष कर्मबन्धविमोचनम् ।
भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥
श्रीभगवानुवाच—
न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ।
संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥
वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥७॥
यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥८॥
अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया ॥९॥
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ।
उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥ १० ॥
सन्ध्योपास्त्यादिकर्माणि वेदेनाऽऽचोदितानि मे ।
पूजां तैः कल्पयेत्सम्यक्संकल्पः कर्मपावनीम् ११
शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥१२॥
चलाऽचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥१३॥
अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम् ।

१ विज० येन त्वां । २ वीर० पुरुषर्षभ । ३ वीर० परं निःश्रेयसं । ४ वीर० विधिना चोदितानि । विज० वेदतन्त्रोदितानि । ५ वीर० पावनी । विज० पावनः ।

स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥१४॥
द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ।
भक्तस्य च यथा लब्धैर्हृदि भावेन चैव हि ॥१५॥
स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव
स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः॥१६॥
सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ।
श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥ १७ ॥
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ।
गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः१८
शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः ।
आसीनः प्रागुदग्वाऽर्चेदर्चायामथ संमुखः॥१९॥
कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् ।
कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥ २० ॥
तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ।
प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् २१
पाद्यार्घाचमनीयार्थं त्रीणि पात्राणि दैशिकः
हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमन्त्रयेत्॥
पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ।
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् २३
तयाऽऽत्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः ।
आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत्२४
पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ।
धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम २५
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ।
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥२६॥
सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥२७॥

१ उभ० तु विलेप्यायां । २ उभ० ष्वमायया । ३ विज० भक्त्या चैव । ४ वीर० अर्चायामुद्धवार्चनं । ५ विज० इदमर्धं नास्ति । वीर० पूर्वोत्तरार्धौ अधरोत्तरतया वर्तेते । ६ विज० कृतन्यासो मदर्चां च पाणिनाऽभिमृशेद्बुधः । ७ उभ० पाद्यार्घ्या । ८ विज० संपद्य । ९ विज० पाद्योपस्पर्शनार्घ्यादीनुप । १० वीर० गदाब्जेषु ।

नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।
महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥ २८ ॥
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् ।
स्वेस्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः २९
चन्दन
सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥३०॥
स्वर्णघर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥३१॥
वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥३२॥
पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् ।
धूपदीपोपहार्याणि दद्यान्मे श्रद्धयाऽर्चकः ॥३३॥
गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ।
संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३४ ॥
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।
अन्नाद्यगीतनृत्यादि पर्वणि स्युरुतान्वहम् ॥३५॥
विधिना विहिते कुण्डे मेखलागर्तवेदिभिः ।
अग्निमाधाय परितः समूहेत्पाणिनोदितम् ॥३६॥
परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ।
प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम्
तप्तजांबूनदप्रख्यं शङ्खचक्रगदांबुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥३८॥
स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥३९॥
ध्यायन्नभ्यर्च्य दारूणि हविषाऽभिघृतानि च ।
प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः४०
जुहुयान्मूलमन्त्रेण षोडशर्चाऽवदानतः ।
धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः४१
अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।
मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥ ४२ ॥
दत्त्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ।
मुखवासं सुरभिमत्तांबूलाद्यमथार्हयेत् ॥ ४३ ॥
उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम ।
मत्कथाः श्रावयञ्शृण्वन्मुहूर्तं क्षणिको भवेत् ४४
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥४५॥
शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥४६॥
इति शेषां मया दत्तां शिरस्याधाय सादरम्
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥४७॥
अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ।
सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥४८॥
एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ४९
मदर्चां संप्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् ।
पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान्५०
पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ।
क्षेत्रापणपुरग्रामान्दत्त्वा मत्सार्ष्टितामियात् ॥५१॥
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ५२
मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।
भक्तियोगं स लभत एवं यः पूजयेत माम् ॥५३॥
यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ।
वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥५४॥
कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ।
कर्मणा भागिनः प्रेत्य भूयो भूयसि तत्फलम् ५५

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥

१ विज० स्वस्व । २ विज० धामनीराजना । ३ विज० यथोचितैः । ४ विज० सुमनसोज्ज्वलं । ५ विज० अन्नादिनृत्यगीतानि सर्वाणि स्युस्तथाऽन्वहं । ६ विज० प्रोक्षणीयानि द्रव्याणि प्रोक्ष्याग्नावावहेत मां । ७ विज० हविषाऽभिघृतानि च । ८ विज० वाघार्य । ९ उभ० षोडशार्चा । १० विज० विधानतः ।

१ विज० अभ्यर्च्याग्नि नम । २ विज० मुहूर्तक्षणिके भवेत् । ३ विज० ततः शेषां । ४ वीर० दुद्वास्यां । ५ विज० यथा । ६ विज० अर्चानुभावतः । ७ विज० पूजां तत्रोत्सवाश्रितां ।

## अष्टाविंशोऽध्यायः ॥ २८ ॥

पूर्वोक्तस्य ज्ञानयोगस्यात्र संक्षेपतः पुनर्निरूपणं ॥ १ ॥

**श्रीभगवानुवाच—**

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥ १ ॥
परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रश्यते स्वार्थाद्[1]सत्यभिनिवेशतः ॥२॥
तैजसे निद्रयाऽऽपन्ने पिण्डस्थो नष्टचेतनः ।
मायां प्राप्नोति मृत्युं[3] वा तद्वन्नानार्थ[2]दृक् पुमान्॥३॥
किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥
छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः ।
एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम्॥५॥
आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥६॥
तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः ।
निरूपितेऽयं त्रिविधा निर्मूला भातिरात्मनि[4] ।
इदं गुणमयं विद्धि त्रिविधं[5] मायया कृतम् ॥७॥
एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ।
न निन्दति न च स्तौति लोके चरति सूर्यवत्॥८॥
प्रत्यक्षेणानुमानेन निगमेनाऽऽत्मसंविदा ।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥९॥

**उद्धव उवाच—**

नैऽऽवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ।
अनात्मस्वदृशोरीश कस्य[6] स्यादुपलभ्यते ॥ १० ॥
आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ।
अग्निवदारुवदचिद्देहः[7] कस्येह संसृतिः ॥ ११ ॥

**श्रीभगवानुवाच—**

यावद्देहेन्द्रियप्राणैरात्मनः संनिकर्षणम् ।
संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः[1] ॥१२॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा॥१३॥
यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥१४॥
शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहंकारस्य दृश्यन्ते जन्म मृत्युश्च[2] नाऽऽत्मनः १५
देहेन्द्रियप्राणमनोभिमानो
जीवोन्तरात्मा गुणकर्ममूर्तिः ।
सूत्रं महानित्युरुधेव गीतः[3]
संसार आधावति कालतन्त्रः ॥ १६ ॥
अमूलमेतद्बहुरूपरूपितं[4]
मनोवचःप्राणशरीरकर्म ।
ज्ञानासिनोपासनया शितेन
च्छित्त्वा मुनिर्गां विचरत्यतृष्णः[5] ॥ १७ ॥
ज्ञानं विवेको निगमस्तपश्च
प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं
कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥
यथा हिरण्यं स्वकृतं पुरस्ता-
त्पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं[6]
नानापदेशैरहमस्य तद्वत् ॥ १९ ॥
विज्ञानमेतत्त्रियवस्थमङ्ग[7]
गुणत्रयं कारककार्यकर्तृ ।
समन्वयेन व्यतिरेकतश्च
येनैव तुर्येण तदेव सत्यम् ॥ २० ॥
न यत्पुरस्तादुत यन्न पश्चा-

---

१ विज० स्थानादसत्याभि । २ विज० तद्धि नानार्थदं । ३ विज० ऽमुष्मा । ४ विज० मतिरात्मनि । ५ वीर० विविधं । ६ वीर० कस्येदमुप । विज० कस्येयमुप । ७ वीर० अग्निवद्दारुवद्देहस्त्वचित्कस्येह । विज० अग्निवद्दारुवदपि देहः कस्येति ।

१ वीर० ष्यविवेकतः । २ वीर० जन्ममृत्यू च । ३ वीर० नीतः । ४ विज० रूपरूपं । ५ वीर० विचरेदतृष्णः । ६ वीर० व्यवहार्यमाणो । ७ विज० मेतत्त्रिपदस्थ ।

न्मध्ये च तन्न[1] व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद्य-
त्तदेव तत्स्यादिति मे मनीषा ॥ २१ ॥
अविद्यमानोऽप्यवभासते यो
वैकारिको[2] राजससर्ग एषः ।
ब्रह्म स्वयंज्योतिरतो[3] विभाति
ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥ २२ ॥
एवं स्फुटं[4] ब्रह्मविवेकहेतुभिः[5]
परापवादेन विशारदेन ।
छित्त्वाऽऽत्मसंदेहमुपारमेत[6]
स्वानन्दतुष्टोऽखिलकामुकेभ्यः ॥ २३ ॥
नाऽऽत्मा वपुः पार्थिवमिन्द्रियाणि
देवा ह्यसुर्वायुजलं हुताशः ।
मनोऽन्नमात्रं धिषणा च सत्त्व-
महङ्कृतिः खं[7] क्षितिरर्थसाम्यम् ॥ २४ ॥
समाहितैः कः करणैर्गुणात्मभि-
र्गुणो भवेन्मत्सुविविक्तधाम्नः[8] ।
विक्षिप्यमाणैरुत किंनु दूषणं
घनैरुपेतैर्विगतै रवेः किम् ॥ २५ ॥
यथा नभोवाय्वनलांबुभूगुणै-
र्गतागतैर्वर्तुगुणैर्न[9] सज्जते ।
तथाऽक्षरं सत्त्वरजस्तमोमलै-
रहंमतेः[10] संसृतिहेतुभिः परम् ॥ २६ ॥
तथाऽपि सङ्गः परिवर्जनीयो
गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन याव-
द्रजो निरस्येत मनःकषायः[11] ॥ २७ ॥
यथाऽमयोऽसाधु चिकित्सितो नृणां
पुनःपुनः संतुदति प्ररोहन् ।
एवं मनोऽपक्वकषायकर्म
कुयोगिनं विध्यति सर्वसङ्गम् ॥ २८ ॥
कुयोगिनो[1] ये विहितान्तरायै-
र्मनुष्यभूतैस्त्रिदशोपसृष्टैः ।
ते प्राक्तनाभ्यासबलेन भूयो
युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥ २९ ॥
करोति कर्म क्रियते च जन्तुः
केनाप्यसौ चोदित आनिपातात् ।
न तत्र विद्वान्प्रकृतौ स्थितोऽपि
निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥
तिष्ठन्तमासीनमुत व्रजन्तं
शयानमुक्षन्तमदन्तमन्नम्[2] ।
स्वभावमन्यत्किमपीहमान-
मात्मानमात्मस्थमतिर्न वेद ॥ ३१ ॥
यदि स्म पश्यत्यसदिन्द्रियार्थं[3]
नानाऽनुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी
स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥
पूर्वं गृहीतं गुणकर्मचित्र-
मज्ञानमात्मन्यविविक्तमङ्ग ।
निवर्तते तत्पुनरीक्षयैव
न गृह्यते नापि विसृज्य आत्मा ॥ ३३ ॥
यथाहि भानोरुदयो नृचक्षुषां
तमो निहन्यान्न तु सद्विधत्ते[4] ।
एवं समीक्षानिपुणा सती मे
हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥ ३४ ॥
एष स्वयंज्योतिरजोऽप्रमेयो
महानुभूतिः सकलानुभूतिः ।
एकोऽद्वितीयो वचसां विरामे[5]
येनेषिता[6] वागसवश्चरन्ति ॥ ३५ ॥

१ विज० यन्न व्यपदेश । २ वीर० प्यवभाति यो वै वैकारिको । ३ वीर० स्फुटब्रह्म । ४ विज० विविच्य । ५ विज० विवेकबुध्या । ६ वीर० त्मसंमोह । ७ विज० कृति । ८ विज० भवेत्तत्सुविविक्त । ९ विज० गतैर्वा त्रिगुणैर्न । १० वीर० रहंमतेः । विज० असंगतं । ११ विज० तमःकषायं ।

१ वीर० कुयोगिनों विहता अन्तरायै । विज० कुयोगिनो ये विहता ह्यन्तरायै । २ विज० मुञ्चन्त । ३ वीर० पश्यन्नस । ४ उभ० संविधत्ते । ५ उभ० विरामो । ६ विज० येनेरिता वाग्वचनाश्चरन्ति ।

एतावानात्म[1]संमोहो यद्विकल्पस्तु के[2]वले ।
[3]आत्मन्नृते स्वमात्मानम[4]वलंबो न यस्य हि ॥३६॥
यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।
व्यर्थेनाप्यर्थवादोऽयं [5]द्वयं पण्डितमानिनाम्॥३७॥
यो[6]गिनोऽपक्वयोगस्य युञ्जतः का[7]यं उत्थितैः ।
उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥३८॥
योगधारणया कांश्चिदासनैर्धारणान्वितैः ।
तपोमन्त्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥३९॥
कांश्चिन्ममानुध्यानेन [8]नामसंकीर्तनादिभिः ।
योगेश्वरानुवृत्त्या वा हन्यादशुभदान्शनैः ॥४०॥
केचिद्देहमिमं धीरा[1]ः सुकल्पं वयसि स्थिरम् ।
विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥४१॥
[2]न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ।
अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४२ ॥
योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ।
तच्छ्रद्दध्यान्न मतिमान्योगमुत्सृज्य मत्परः॥४३॥
योगचर्यामिमां योगी विचरन्मद्व्यपाश्रयः ।
नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥४४॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धेऽष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

पूर्वोक्तस्य भक्तियोगस्य पुनरत्र संक्षपतो निरूपणं ॥ १ ॥ उद्धवस्य बदरिकाश्रमप्रवेशः ॥ २ ॥

**उद्धव उवाच—**
[9]सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः ।
यथाञ्जसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यञ्जसाऽच्युत ॥१॥
प्रायशः पुण्डरीकाक्ष [10]युञ्जन्तो योगिनो मनः ।
विषीदन्त्यसमाधाना[11]न्मनोनिग्रहकर्शिताः ॥ २ ॥
[12]अथात आनन्ददुघं पदांबुजं
हंसाः श्रयेरन्नरविन्दलोचन ।
[13]सुखं नु विश्वेश्वर योगकर्मभि-
स्त्वन्माययाऽमी विहता न मानिनः ॥ ३ ॥
किं चित्रमच्युत तवैतदशेषबन्धो
दासेष्वनन्यशरणेषु [14]यदात्मसात्त्वम् ।
योऽ[15]रोचयत्सह मृगैः स्वयमीश्वराणां
श्रीमत्किरीटतट[3]पीडितपादपीठः ॥ ४ ॥
तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां
सर्वार्थदं [4]स्वकृतविद्विसृजेत को नु ।
[5]को वा भजेत्किमपि विस्मृ[6]तयेऽनुभूत्यै
किं [7]वा भवेन्न तव पादरजो[8]र्जुषां नः ॥ ५ ॥
[9]नैवोपयन्त्यपचितिं कवयस्तवेश
ब्रह्मायु[10]षाऽपि [11]कृतमृद्धमुदः स्मरन्तः ।
योन्तर्बहिस्तनुभृतामशुभं विधुन्व-
न्नाचार्यचैत्त्यवपुषा स्वगतिं [12]व्यनक्ति ॥ ६ ॥
**श्रीशुक उवाच—**
इत्युद्धवेनात्यनुरक्तचेतसा
पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।

---

१ वीर० संयोगो । २ वीर० केवलं । ३ विज० आत्मामृते । ४ विज० मचलं यन्न पश्यति । ५ विज० द्वयं विन्दन्ति सूरयः । ६ वीर० योगेनापक्व । ७ विज० काल । ८ विज० मम । ९ वीर० सुदुष्करामिमां । विज० सुदुश्चरामिमां । १० विज० युञ्जतो । ११ विज० मौनसंयमकर्शितं । १२ विज० अथोत । १३ वीर० सुखं तु योगेश्वर । १४ विज० वदात्मदस्त्वं । १५ विज० यो रोचयश्च पशुपैः ।

१ विज० धार्य । २ विज० इह वर्षशताशीत्या । ३ विज० किरीटमणिघट्टितपाद । ४ विज० सुकृतविद्विसृजेत । ५ वीर० को वा भजेत किमविस्मृतये । ६ विज० विस्मृतचित्तवृत्तिः । ७ विज० किं वा न वेद तव । ८ वीर० पादरजोऽमृताभः । ९ विज० नैवोपयान्त्यप । १० विज० ब्रह्मादयोपि । ११ वीर० कृतमिद्धमुदः । विज० नतमूर्धसदास्मरन्तः । १२ विज० व्यनक्ति ।

गृहीतमूर्तित्रय
जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥

**श्रीभगवानुवाच—**

हन्त ते कथयिष्यामि मम धर्मान्सुमङ्गलान् ।
याञ्श्रद्धयाचरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥८॥
कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।
मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥
देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ।
देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥
पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ।
कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥
मामेवं सर्वभूतेषु बहिरन्तरपावृतम् ।
ईक्षेताऽऽत्मनि चाऽऽत्मानं यथा खममलाशयः १२
इति सर्वाणि भूतानि मद्भावेन महाद्युते ।
सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥१३॥
ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक्पण्डितो मतः ॥ १४॥
नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ।
स्पर्धाऽसूयातिरस्काराः साहंकारा वियन्ति हि१५
विसृज्य स्मयमानान्स्वान्दृशं व्रीडां च दैहिकीम् ।
प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥ १६ ॥
यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ।
तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥
सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।
परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥ १८ ॥
अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।
मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥
नह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि ।
मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः॥२०॥
यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत् ।
तदाऽऽयासो निरर्थः स्याद्भयादेरिव सत्तम॥२१॥
एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥२२॥
एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः ।
समासव्यासविधिना देवानामपि दुर्गमः ॥२३॥
अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ।
एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥
सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् ।
सनातनं ब्रह्म गुह्यं परं ब्रह्माधिगच्छति ॥ २५ ॥
य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम् ।
तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना॥२६॥
य एतत्समधीयीत पवित्रं परमं शुचि ।
स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥
य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः ।
मयि भक्तिं परां कुर्वन्कर्मभिर्न स बध्यते ॥२८॥
अप्युद्धव त्वया ब्रह्म सखे समवधारितम् ।
अपि ते विगतो मोहः शोकश्चासौ मनोभवः २९
नैतत्त्वया दांभिकाय नास्तिकाय शठाय च ।
अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥३०॥
एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ।
साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम्३१
नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।
पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥
ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे ।
यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः॥३३॥
मर्त्यो यदा त्यक्तसमस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे ।

१ उभ० वर्णयिष्यामि । २ विज० याञ्शुद्धानाचर । ३ वीर० पुण्यान् पूजयेत । विज० पुण्यान्संश्रयेत । ४ वीर सर्वयात्रा । विज० मम यात्रामहोत्सवं । ५ विज० रन्तरवस्थितं । ६ विज० माश्रयन् । ७ विज० ब्रह्मण्यर्के । ८ विज मद्भावः । ९ विज० स्याद्वा माया तिरस्कारं साहंकारापि याति हि । १० विज० स्वयमात्मस्थां दृश्य व्रीडां । ११ वीर प्रणमेदीश्वरकलामाश्व । १२ विज० परिपश्यति च परं परमात्मानमच्युतं । १३ विज० कायकर्मभिः ।

१ वीर० पक्रमध्वंसो । २ विज० नधूरस्योद्धवा । ३ उभ० व्यवसितं । ४ विज० परो मनोधर्मः कल्पते निष्फलाय ते । ५ विज० तथा । ६ विज० न्नयादेरिव । ७ वीर० अभीक्ष्णं ते निगदितं । ८ वीर० मयैतदवधारितं । विज० मयोक्तमपि धारयन् । ९ वीर० दास्याम्यात्मान । १० उभ० समुपधारितं । ११ विज० तावान्मोहश्चतुर्विधः ।

तदाऽमृतत्वं प्रतिपद्यमानो
मयाऽऽत्मभूयाय च कल्पते[1] वै ॥ ३४ ॥

**श्रीशुक उवाच—**

स एवमादर्शितयोगमार्ग-
स्तदोत्तमश्लोकवचो[2] निशम्य ।
बद्धाञ्जलिः[3] प्रीत्युपरुद्धकण्ठो
न किंचिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥

विष्टभ्य चित्तं प्रणयावघूर्णं
धैर्येण राजन्बहुमन्यमानः ।
कृताञ्जलिः प्राह यदुप्रवीरं
शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥

**उद्धव उवाच—**

विद्रावितो मोहमहान्धकारो
य आश्रितो मे तव सन्निधानात् ।
विभावसोः किंतु समीपगस्य
शीतं तमो भीः प्रभवन्त्यजाद्य ॥ ३७ ॥

प्रत्यर्पितो[4] मे भवताऽनुकंपिना
भृत्याय विज्ञानमयः प्रदीपः ।
हित्वा कृतज्ञस्तव पादमूलं
कोऽन्यत्समीयाच्छरणं[5] त्वदीयम् ॥ ३८ ॥

वृक्णश्च मे सुदृढः स्नेहपाशो
दशार्हवृष्ण्यन्धकसात्त्वतेषु ।
प्रसारितः सृष्टिविवृद्धये त्वया
स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥

नमोऽस्तु ते महायोगिन्प्रपन्नमनुशाधि माम् ।
यथा त्वच्चरणांभोजे रतिः स्यादनपायिनी ॥४०॥

**श्रीभगवानुवाच—**

गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं ममाऽऽश्रमम् ।
तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥४१॥

ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः ।
वसानो वल्कलान्यङ्ग वन्यभुक्सुखनिःस्पृहः ४२

तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः ।
शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥४३॥

मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन्[1] ।
मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ।
अतिव्रज्य[2] गतीस्तिस्रो मामेष्यसि ततः परम् ४४

**श्रीशुक उवाच—**

स एवमुक्तो हरिमेधसोद्धवः
प्रदक्षिणं तं परिसृत्य[3] पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधी-
र्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे ॥ ४५ ॥

सुदुस्त्यजस्नेहवियोगकातरो
न शक्नुवंस्तं परिहातुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके
बिभ्रन्नमस्कृत्य ययौ पुनःपुनः ॥ ४६ ॥

ततस्तमन्तर्हृदि संनिवेश्य
गतो महाभागवतो विशालाम् ।
यथोपदिष्टां जगदेकबन्धुना
ततः[4] समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥

य एतदानन्दसमुद्रसंभृतं
ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा
सच्छ्रद्धयाऽसेव्य जगद्विमुच्यते ॥ ४८ ॥

भवभयमपहन्तुं[5] ज्ञानविज्ञानसारं
निगमकृदुपजह्रे[6] भृङ्गवद्वेदसारम् ।
अमृतमुदधितश्चापाययद्भृत्यवर्गा-[7]
न्पुरुषमृषभमाद्यं[8] कृष्णसंज्ञं[9] नतोऽस्मि ॥ ४९ ॥

... एकादशस्कन्धे एकोनत्रिंशो ... ॥ २९ ॥

---

१ विज० कल्पतेऽसौ । २ वीर० तदुत्तम । ३ वीर० कृताञ्जलिः प्रत्यवरुद्ध । ४ विज० प्रवर्धिता मे भवताऽनुकंपिता दत्तो हि विज्ञानमयः । ५ विज० को ज्ञः समीयाच्छरणं त्वदन्यं ।

१ वीर० भवान् । २ विज० अतिक्रम्य । ३ वीर० वृत्य । ४ उभ० तपः । ५ उभ० मपहर्तु । ६ विज० मकुमुददभ्रं भृङ्गवद्वेद्यसारं । ७ विज० मुदधिकल्पं पा न्भृत्य । ८ वीर० परमपुरुषमाद्यं । विज० पुरुषक्रा ९ विज० विष्णुसंज्ञं ।

